# प्रस्तावना.

सुज्ञ वाचको ! अमारा जीवनना आधार परमपवित्र परमपूज्य विश्वविख्यात श्रीजैनधर्मप्रभावक स्वर्गस्थ महात्मा श्रीविजयानंद सूरीश्वरजी–श्रीआत्मारामजी महाराजजी साहेबना परोपकारपरायण शिष्य प्रवर्तक महामुनि श्रीकांतिविजयजी महाराजजीनी आज्ञानुसार आ ग्रंथने संशोधी भाषान्तर साथे तैयार करी आपनार अमारा विद्वान् मित्र वैद्यराज मगनलालभाइ चुनीलाल वडोदरावाळा छे अने महाराजजीए पोते विद्वत्ता भरेलो उपोद्घात लख्योछे. तेथी आपनी सर्व प्रकारनी जिज्ञासा पूरी थाय तेम छे. माटे अमो अहीं ते उपकारी मुनिमहाराजनो अने वैद्यराजनो त्रिकरणयोगे उपकार मानवानी फरज ज बजावीए छीए. पण ते सिवाय बीजो एक खुलासो करवानी जरुर जणायछे. आ ग्रंथनुं मूल तथा भाषान्तर छपाववानो तमाम खर्च बीजापुरवासी धर्मात्मा शा. मूलचंद सरूपचंदना मृत्युपत्रना आधारे तेमना ट्रस्टीओ शा. सूरचंद सरूपचंद तथा दलीचंद रवचंद एमणे अने एकला भाषांतरनी वधारे नकलो छपाववानो खर्च वडोदरावासी धर्मबंधुओ झवेरी छोटालालभाइ लालचंद परभुदास तथा गोकळभाइ दुल्लभदास एमणे आपीने अमने अत्यंत आभारी कर्या छे. तेमनी एवी उदारताथी आ उपयोगी ग्रंथ विना मूल्ये पण आपवानी अनुकुळता थइछे. तेम छतां अमे तेमनी ज इच्छानुसार जे नामनी वेचाणकिंमत राखी छे तेथी मळतो लाभ आवां उपयोगी पुस्तको छपाववाना काममां ज वपराशे अने तेथी थती पुण्यपरंपराना भागी पण तेओज थशे. अलम्.

भावनगर.<br>पौषसुदि ५. } श्री जैन आत्मानंद सभा.

# उपोद्घात.

अध्यात्मशास्त्रसम्भूतसन्तोषसुखशालिनः ।
गणयन्ति न राजानं न श्रीदं नापि वासवम् ॥

श्री न्यायाचार्य यशोविजयजी.

आ असार संसारमहोदधिमां जन्ममरणादिक अत्युग्र कष्टोथी मुक्त थवा माटे अनाथ आत्माओ अनेक उपायो शोधेछे. सत्य धर्म माटे अनेक कल्पनाओ करेछे, मूर्खातापनाओ सहेछे, जडभूत थइ इंद्रियोने दमेछे, एकांत स्थळोमां रमेछे, नीरस भोजनो जमेछे, क्रोधमानमायालोभादिक आत्मशत्रुओथी वेगळा रहेवुं गमेछे, नम्रतादि गुणगणेकरी गुणिजनोने नमेछे, प्राणियोना प्राणोने प्रपात करतां देखी कमकमेछे अने अनेक प्रकारनां योगसाधनो करवा माटे रसाळ भूतळोमां भमेछे. परंतु जे अध्यात्मशास्त्रना अमृतांजन विना निरंजनपदावबोध करवा धारेछे ते समल नेत्रोए निर्मल सूर्यावबोध करवा विचारेछे. "आत्मनि अधिकृत्य अध्यात्मम्" ए वचनथी जेमां आत्मसंबंधी अधिकार-विचार होय तेने अध्यात्मशास्त्र कहेवुं योग्य छे.

अध्येतव्यं तदध्यात्मशास्त्रं भाव्यं पुनःपुनः ।
अनुष्ठेयस्तदर्थश्च देयो योग्यस्य कस्यचित् ॥

एवा अध्यात्मशास्त्रनुं अध्ययन करवुं, वारंवार तेनी भावना भाववी-ते संबंधी विचार करवो अने तेनो अनुष्ठानमां-वर्तनमां मूकवा लायक अर्थ कोइ योग्य होय तेने आपवो-बनाववो. अर्थात् आत्मतत्त्व अने अनात्मतत्त्वनो विचार करवो. आत्मसंबंधी ज्ञान संप्राप्त करवुं. अनात्म-जड संबंधी ज्ञान संपादन करवुं. ए बे पदा-

थीनो भेद शुं छे ते विषे सविस्तार ज्ञानप्रकाश करवो. ए प्रकाश पण स्वपरबोधक होवो इष्ट छे. औपचारिकमात्रथी साफल्य मानवुं ते कल्पनामात्रथी भले रहो पण ते तत्त्वतः अंधकारने प्रभाकर-करनिकर मानवा समान छे.

अध्यात्मज्ञानोदय थाय त्यारे आत्मा प्रत्येक प्राणिना प्राणोने पोताना प्राण समान जाणे. विषयाधीन थइ अन्य प्राणियोना प्राणोनो विनिपात न करे एटलुंज नहि पण अज्ञानजनकल्पित धर्म-कृत्योने पण न माने.

अहिंसासम्भवो धर्मः स हिंसातः कथं भवेत् ।
न तोयजानि पद्मानि जायन्ते जातवेदसः ॥

विचार करो के जळथी थवावाळां कमळो अग्निथी थतां नथी तो अहिंसाथी थनारो धर्म प्राणिहिंसाथी केम थाय ?

पापहेतुर्वधः पापं कथं छेत्तुमलं भवेत् ।
मृत्युहेतुः कालकूटं जीविताय न जायते ॥

पापनुं कारण वध छे ते पाप छेदवा केम समर्थ थाय? मरण-कारण कालकूट जीवित माटे थाय ज नहि. जो धर्मबुद्धिथी जीवहिंसा करतां आत्मा अनंतसंसारी थाय तो विषयाधीन थइ करतां अनंतसंसारी थवामां कोण ना कही शके ? अध्यात्मज्ञानी मिथ्याभाषक पण न होय.

एकत्र सत्यजं पापं पापं निःशेषमन्यतः ।
द्वयोस्तुलाविधृतयोस्तत्राद्यमतिरिच्यते ॥

एक बाजु असत्य बोलवाथी पाप थयुं ते अने बीजी बाजु बीजां संपूर्ण पापो ए बेनी तुलना करीए तो असत्यजनित पाप ज विशेष थाय. अध्यात्मज्ञानी लोभाधीन थइ परकीय वस्तु लेवा पण न

धारे. परं स्वं तस्करो गृह्णन् वधवन्धादि नेक्षते ए वचनथी परधन ग्रहण करनार तस्कर गणाय तो अध्यात्मज्ञानीथी ते केम थाय ? तेमज अध्यात्मज्ञानी नाम धरावी स्त्रीलुब्ध थाय तो तेने शी उपमा आपवी ?

यदेवांगं कुत्सनीयं गोपनीयं च योषिताम् ।
तत्रैव हि जनो रज्यन् केनान्येन विरज्यताम् ॥

स्त्रीनुं जे अंग कुत्सनीय अने गोपनीय छे तेमां पण जे वाल जीव लुब्ध थाय ते शेनाथी विरक्त थाय ? नीचमां नीच चर्मचोरी उपर नजर नाखी नारीनयनानंदी थइ भटकतो फरे-कुध्यानमां मग्न थइ अध्यात्मज्ञानी कहेवडावे तेने होळीना महाराजा जेवा महाराजा विना बीजुं शुं कहेवुं ? तथा योगमग्न महात्माओ धन, धान्य, स्वर्ण, रजत, वस्त्र, पात्र, दास, दासी, स्त्री, हस्ति अने अश्व ए आदिक वाह्य परिग्रहो तथा राग, द्वेष, कषाय, हास्य, रति, अरति, भय, जुगुप्सा, वेद, मिथ्यात्व ए आदि आंतर परिग्रहो जे अध्यात्मज्ञानना शत्रुओ छे तेनो संचय केम करे ?

यदीच्छसि सुखं धर्मं मुक्तिसाम्राज्यमेव च ।
तदा परपरीहारादेकामाशां वशीकुरु ॥
आशैव राक्षसी पुंसामाशैव विषमञ्जरी ।
आशैव जीर्णमदिरा धिगाशा सर्वदोषभूः ॥

जो सुखनी, धर्मनी अने मुक्तिसाम्राज्यनी इच्छा होयतो पदार्थोनी आशामात्रनो त्याग कर. आशा पुरुषोनो नाश करनारी राक्षसीछे. आशा विषमंजरीछे. आशा जीर्ण मदिराछे. सर्व दोषोनी भूमिका आशाछे. माटे आशानो त्याग करे त्यारे ज अध्यात्मवासनाथी वासित आत्मा स्तुति करवा योग्य थाय.

**ते धन्याः पुण्यभाजस्ते तैस्तीर्णः क्लेशसागरः ।**
**जगत्संमोहजननी यैराशाशीविषी जिता ॥**

धन्यछे ते पुण्यात्माओने जेमणे जगत्ने संमोह करनारी आशा रूप सर्पिणीने वश करीछे. जे नाममात्र अध्यात्मवादियो आशाधीन थइ धनवंतोनी आगळ दीनता भरेला शब्दो बोले, खुशी करवामाटे गीतनृत्यादि करे अने एवी एवी विडंबनाओ करे तेमने अध्यात्मशास्त्रनुं परिणाम केवुं थयुं समजवुं ? तथाविध योगिमहाशयो क्रोधाग्निने पण शांत करे. क्रोधानल शांत न करे तो कोटि वर्षना तपसी थया क्षणमात्रमां लपसी गया एना जेवी गति थाय. क्रोधात्मा पोतानो ज नाश करेछे तेम नथी पण परनो पण नाश करेछे. प्रशमरसनिमग्न महायोगी श्रीमहावीरप्रभु म्लेच्छादिकोना घोर उपसर्गो थया तोपण शांत रसथी चलायमान थया नहोता, तेज स्मरवा अने वंदवा योग्य छे. अध्यात्मीथी जातिकुलादिनो मद पण न थाय. थाय तो नीच जातिकुलादिमां जाय. मायाजंजाळमां पण न बंधाय. जो जाळमां बंधाय तो अधोगतिमां ज जवुं थाय. लोभाजगरना मुखमां पण न जाय. जाय तो लोभाजगर अधुरो नहि मुकतां आखो ज गळी जाय. ए चार कषायो महा चंडाळो छे तेमनाथी उत्तम योगात्माओए वेगळा रहेवुं श्रेयस्कर छे. तथा राग, द्वेष, क्लेश, अभ्याख्यान, पिशुनता, रत्यरति, परपरिवाद, मायामृषावाद अने मिथ्यात्वशल्य ए पातकोथी निवृत्तियो शांतात्माओने अवश्य होवी जोइए. पापनुं मुख्य साधन इंद्रियोनुं प्रबळ छे. इंद्रियाधीन थइ भक्ष्याभक्ष्य, पेयापेय अने गम्यागम्यनो विचार पण जो राखे नहि ते आप ज विचार करो के अध्यात्मवादियोनी पंक्तिनी पताका थइ शके ? अध्यात्मपदपंक्ति लेनार महापुरुषो उपर कहेलां कृत्योनी छायाना निवासी पण ना थाय अने संसारदशाथी विरक्त दशामां ज निरंतर ध्यान राखे. जेमके,

आ संसारनी आपदाओ क्यांक्यांथी आवी पडेछे? काळना मुख-यंत्रमां भचडाइ कोइ अवसर जीवडा जता रहेवाना छे. वज्रशरीरियो नष्ट थइ गया तो मारा जेवा पामरो काळवायुना सपाटामां उडी जतां रजकणवत् दर्शन पण नहि थाय. मंत्रतंत्रभैषज्यादि साधनो जीव फावे तेटलां करे पण अंतसमये अनाधार आत्माने आधारभूत नहि ज थाय. भले सुरासुर हो के महाराजा हो. तेमनी रक्षामाटे रक्षकशतको, कुटुंब-शतको, वैद्यशतको, वज्रतलभूमिशतको अने अपारपरिवारशतको तत्पर हो. परंतु अशरण आत्माओ भूतबलिवत् भूतलभोग थया विना रहेशे ज नहि.

अध्यात्मवादियोमां केटलाक तो नामना ज अध्यात्मवादियो, केटलाक स्थापनामात्र अध्यात्मवादियो अने केटलाक अध्यात्मज्ञा-नोपयोगशून्य मात्र द्रव्य-शब्दोनो बकवा करनारा द्रव्याध्यात्म-वादियो होयछे. जेम नाटकाचार्यो नाना प्रकारना वेषो भजवी स्वार्थ साधे तेम द्रव्याध्यात्मवादियो अनेक चेष्टाओ-इंद्रियनि-रुंधनादि वैराग्यजनक आकारो, छटाबंध वचनधाराओ अने योगा-भ्यासप्रचारो करी स्वार्थ साधवा एटले के परधन ते स्वधन केवी रीते थाय तेना उपायो शोधवा अने अनेक प्रकारनां सांसारिक सुखनां साधनो भेगां करवा सांसारिकोने पण न शोभे तेवां कृत्यो धर्मसा-धनना नामे करी भक्तलोकोना तनमनधनने स्वाधीन करी लेछे. ते लोकापवादनो भय पण मानता नथी अने संत, महंत, महाराज, स्वामी, पूज्य, आचार्य इत्यादि पदारोहण करी कार्य साधेछे. वळी केटलाक संसार-गृहस्थावासमां रही परमगुरु तरीके पूज्यकोटि धारण करी भोळी प्रकृतिना मनुष्यात्माओने भोळवी तेमनां तनमन-धन आचार्यार्पण करावी सांसारिक साधनो भक्तो करतां पण अधिक भेगां करी भक्तोने दासत्वकोटिमां नाखी अध्यात्मवादि-

योमां आगेवान थइ बेसेछे पण समाधिना साधनो भूली असमाधिनां साधनो सेवेछे. सुरसरूपगंधस्पर्शवाळां फळपाकमिष्टान्नादि भोजन-सामग्रीना भोग भोगवेछे, मनोहर पुष्पहारकलगीअतरवगेरेनी सुगंधिमां गरक थइ जायछे, शृंगाररससार कामोद्दीपक रागरागणीना श्रवणमां लीन थइ जायछे, सुंदर स्त्रीओना हावभावकटाक्षरूप रंगनाट्यकलादि निहाळवामां मस्त बनी तेमना अंगअनंगविलासनी फांसीमां फसाइ जायछे अने पुत्रपौत्रादि संतति परिवार तथा तेमना लग्नमहोत्सवादि जोइ ते दिवसोने धन्य—कृतार्थ—महानंददायी मानेछे. अर्थात् मनोराज उपर विजय नहि मेळवतां इंद्रियोने वश पडी पोते अकृत्योमां प्रवृत्त थइ स्वभक्तोने पण तेवा अकार्यमां जोडी स्वपरहित माने—मनावे छे. ते पण द्रव्याध्यात्मवादियोनी राजिमां मूकवा लायक छे. तेवा बनावटी अध्यात्मवादियोनां भणेलां—रचेलां शास्त्रो पण शस्त्ररूप थइ स्वपरनो नाश करनारां थइ जायछे. जो द्रव्याध्यात्मवादियो तत्त्वांध थइ एम कहे के अमारा पण अंतःकरणमां तत्त्वज्ञानरूपी सूर्यनो उदय थयोछे तो तेमनां नेत्रोनुं पूर्वमहर्षिनी ज्ञानांजनशलाकाथी उन्मीलन करवुं. ते ज्ञानरूपी अंजनशलाका केवी छे ?

तज्ज्ञानमेव न भवति यस्मिन्नुदिते विभाति रागगणः ।
तमसः कुतोस्ति शक्तिर्दिनकरकिरणाग्रतः स्थातुम् ॥

अध्यात्मज्ञाननो उदय थाय तो रागादिगण—विषयांधता केम रहे ? सूर्योदय थाय तो अंधकार केम रहे ? अंधकार रहे तो सूर्योदय शेनो ? विषयांधता रहे तो अध्यात्मज्ञानोदय शेनो ? तेम होय तो सर्व विषयांधो तत्त्वज्ञो थइ बेसे. भावाध्यात्मवादियो विषयकषायथी मन दूर राखी निरंतर वैराग्य-भावनाओ भावेछे. जेमके, दीपाग्निमां पतंग जंतुओ बळी मरेछे.

भ्रमरा सुगंधने आधीन थइ मरेछे. मृगो पारधीनी वांसली प्रमुखना मधुर शब्दश्रवणने आधीन थइ मरेछे. मत्सो रसनाधीन थइ मरेछे, हस्तियो स्पर्शेंद्रिय वश पडवाथी मरेछे. जो ए प्रत्येक प्राणी एक एक इंद्रियविषयथी मरेछे तो जे मनुष्यो पांचे इंद्रियोने वश थइ पडेला छे ते अनाथोनी शी गति? जो पंचेंद्रियोनो अधीश्वर मन वश न थाय तो समाधिधारक शी रीते थवाय? माटे हे चेतन! जो उभयलोकनुं हित करवुं होय तो मनने तथा इंद्रियोने वश कर. इंद्रियोने भोग आपवाथी शरीर पुष्ट थशे ते पण हितकारी छे एम कदापि ना जाण. आत्माने ते अहितकारी थशे एटलुंज नहि पण पुष्टिकारक पदार्थो शरीरना संबंधमां आववाथी अपवित्र थइ जशे. शरीरनुं चामडुं, मांस, चरबी, हाड अने रक्त वगेरे कंइ पण काममां न लागतां पडयुं रहे तो मनुष्यो दुर्गंधना भयथी मुखनासिका उपर कपडुं नाखी नासानास करेछे. मूत्र, पुरीष, थुंक, नासिकामळ अने चर्मखंड वगेरेने हाथ अडके तो वारंवार जलादि लेइ धोवा पडे छे. एवा अपवित्र शरीरनो अंते दाह करवामां आवेछे एटले ते अपवित्र शरीरनो अंते तो नाश थइ जशे. माटे सुज्ञ पुरुष भाडानी वस्तुनो सार लेइले तेम आ शरीरवडे संयमक्रिया, परोपकार, दान, शील, तप, शुभाध्यवसाय, ज्ञानाभ्यास अने योगाभ्यास करी मारो आत्मा परमानंदपदस्थ थाय तो सर्व साधनो सफल थयां मानुं. एवी एवी शुभ भावना भावी आत्महितकारी संयमसाधनो करवामां ज प्रमाणिक अध्यात्मज्ञानीओ सदा तत्पर रहेछे.

अध्यात्मविद्या अने अध्यात्मवादियोना संबंधमां अत्र आटलो लांबो प्रस्ताव करवानुं प्रयोजन ए छे के प्रस्तुत ग्रंथ अध्यात्म—आत्मज्ञानना विषयनुं प्रतिपादन करवावाळो छे, तेनो आशय शीघ्र ध्यानमां बेसे. प्रस्तुत ग्रंथनां १ जैन-

तत्त्वसार, २ जीवकर्मविचार अने ३ सूरचंद्रमनःस्थिरीकार एवां त्रण अभिधान–नाम राखवामां आवेलां छे ते शुं सूचवे छे ? राग-द्वेषादि दोषो उपर जित मेळवनार जिन (तीर्थंकर–परमेश्वर) ना दर्शनमां जीव (आत्मा), अजीव (कर्मादि), पुण्य, पाप, बंध अने मोक्ष वगेरे तत्त्वोनो विस्तारथी विचार करेलो छे. ते सामान्य लोकने प्रतिबोध करवाना हेतुथी लोकप्रसिद्ध दृष्टांतो साथे साररूपे आ लघु ग्रंथमां आपेलो छे. तेथी जेमप्रथम नाम सार्थक समजाय-छे तेम बीजानो अर्थ पण स्पष्ट समजायछे अने त्रीजा नाममां ग्रंथ-कर्त्तानुं पोतानुं नाम सूचित थवानी साथे अध्यात्मसंबंध विशेषतः व्यंजित थायछे. सूर एटले सूर्यनाडी, चंद्र एटले चंद्रनाडी अने मनः एटले मध्य–सुषुम्णा नाडी जेमां वायुनो संचार करवाथी मननी स्थिरता थाय छे. तेमना स्थिरीकार एटले सूर्यादि नाडीओनी स्थिरता *अथवा सूरचंद्रना अने बीजाना मननी स्थिरता–समाधि माटे आ ग्रंथ रचवामां आव्योछे. योगस्य हेतुर्मनसः समाधिः मननी समाधि ए योग–अध्यात्मनो हेतु छे माटे आ ग्रंथ अध्यात्मशास्त्रनी कोटिमां ज मूकवा लायक छे.

ग्रंथारंभे निकटोपकारी योगीश्वर श्रीवर्धमान–महावीरस्वामीने नमस्काररूप मंगल करी किञ्चिद्विचारं स्वविदे समूहे ए वाक्यथी वस्तुनिर्देश करवामां आव्योछे के आत्मज्ञान माटे किंचित् विचार दर्शाववुं एटलुं ज नहि पण स्थळे स्थळे ए विषय उपर भार मूकी लक्ष खेंचवामां आव्युंछे.

---

* तेनामुको वाचकसूरचन्द्रनामा रसज्ञाफलमित्थमिच्छता ।
ग्रन्थोऽभितोऽग्रन्थि मया स्वकीयान्यदीयचेतःस्थिरतोपसम्पदे ॥
२१ अ. २१ श्लो.

तत्सेधने साधुगृहस्थमुख्यैरात्मावबोधे परियत्न एष्यः ।
१६ अ. ३३ श्लो.

ते (निराकारमां चित्तनी स्थिरता) साधवाने साधु अने गृहस्थ प्रमुखोए आत्मावबोध–आत्मज्ञानमां समस्तप्रकारें यत्न करवो.

यदात्मबोधान्न परोऽस्ति सिद्ध्यै हेतुस्ततोऽत्रैव यतध्वमध्वनि,
२० अ. २२ श्लो.

सिद्धि–मुक्ति माटे आत्मबोधथी अन्य हेतु नथी माटे एज मार्गमां–आत्मज्ञानमां प्रयत्न करो. वळी ज्ञानमात्रथी नहि पण साथे चारित्र–क्रियानुं आराधन करवाथी ज मोक्षनी प्राप्ति थायछे अने त्यारे ज आत्मज्ञान प्रकट थयुं एम समजाय एवो प्रघोष करवा पण चुक्या नथी.

इत्यादिका ये भगवद्गुणौघाः शास्त्रेषु दृष्टा अथ तान्प्रकल्प्य ।
मुमुक्षवोऽमी अपि शक्तियोग्यमादृत्य सिध्यन्त्यपि ते क्रमेण ॥
१६ अ. १७ श्लो.

इत्यादि प्रकारे जे गुणो सिद्धभगवंतमां होवानुं शास्त्रोमां जोवामां आवेछे ते गुणोने मुमुक्षुओ धारीने यथाशक्ति आदरी क्रमे करी सिद्ध थायछे.

यावत्कषायान्विषयान्निषेवते संसार एवैष निगद्य आत्मा ।
एतद्विमुक्तोऽजनि यावदात्मावबोधयुग्मोक्ष इतीरितोऽयम् ॥
२० अ. १७ श्लो.

ज्यांसुधी कषाय अने विषयोनुं सेवन करे त्यांसुधी आ आत्मा संसारमां ज छे अने आत्मज्ञान थयाथी ज्यारे कषाय तथा विषयथी मुक्त थाय त्यारे तेज मोक्षमां छे एम विचारवुं. कषाय अने विषयथी

मुक्त थवानुं क्यारे बने के ज्यारे मनने वश करवामां आव्युं होय. ते सिद्धांत पण मुक्तिमार्ग बतावतां स्पष्टताथी निवेदन कर्योछे.

सर्वस्य चैतस्य मनोनिरोधो हेतुस्ततोऽत्रैव रमध्वमध्वनि ।
२० अ. ३२ श्लो.

ए सर्वनो हेतु मनोनिरोध छे माटे एज मार्गमां रमण करो.

हवे आ ग्रंथमां अध्यात्मने लगता कया कया प्रश्नो विषे विचार कर्योछे ते माटे विषयोनी अनुक्रमणिका जोवानी सूचना करीने ए विषयनुं विशेष विवरण करवावाळा सूत्र-सिद्धांत तेमज सन्मतितर्क, तत्त्वार्थ, कर्मप्रकृति, योगदृष्टि अने योगशास्त्र वगेरे अनेक महान् ग्रंथो छतां आ ग्रंथ रचवामां कर्त्ताए केवा संजोगोमां प्रवृत्ति करी अने ए पोते कोण हता ते संबंधी वाचकोनी आकांक्षा पुरी पाडवा माटे अत्र *एकवीसमा अधिकारनो आवश्यक तेटलो अनुवाद ज करवानुं योग्य धारुंछुं.

" आ विचारने पुरातन मुनियो ग्रंथोमां अतीव विस्तारथी ग्रंथन करी गयाछे. परंतु तेमां आ युगना अल्प बुद्धिवाळा आत्माओनी मति प्रसार थाय तेम नथी. जीव अने कर्म संबंधी आ ग्रंथमां आपेला प्रश्नो कोइ शैवे मने अति आग्रहथी कर्या हता अने श्री जिनेश्वर भगवंतना मतनी अवहेलना न थाय एम विचारीने में ए प्रकारे अजाण छतां ए धृष्टताथी शीघ्र उत्तर आप्या हता. जेम जेम तेणे हृदयमा तर्क उठवाथी सहसा प्रश्नो कर्या हता तेम तेम में तेनुं कहेवुं आगळ करीने जैन तरीके उत्तर आप्या हता. ए प्रश्नोना उत्तर केवल लौकिक उक्तिमां-व्यवहारमां प्रसिद्ध छे तेवा आप्या हता. पुराण

* आ अधिकारमांना विषयनो अहीं उल्लेख थवाथी भाषांतरमां ते लीधो नथी.

—प्राचीन शास्त्रोमां जेमनी बुद्धि प्रवेश करी शके तेवी होय ते ए विषयमां पुरातन युक्तिनो आदर करो. पण आ विचारमां मारो गोचर—विषय नथी एटलुं ज नहि पण विद्वानो ए एमां मुझाय तेम छे. केवलि विना सर्व श्रुत—सिद्धांतने जोनारा प्रकट थाय तो ते पण ए कहेवाने समर्थ न थाय. माटे आ मारुं साहस जोइने दक्षोए हसवुं नहि. शुं बाळकने समुद्रनुं प्रमाण पूछवामां आवे तो ते पोतानी बुद्धिथी हाथवडे न बतावे ? अथवा अल्प बुद्धिवाळाने माटे एमां शासन—बोध छे माटे ए शास्त्र ज हो. जे उक्ति प्रत्युक्ति अने निर्युक्तिथी युक्त होय तेने विद्वानो शास्त्र कहेछे. आ मारो उद्यम आस्तिकोने अने नास्तिकोने आनंद आपवा माटे छे ते आस्तिकोमां आस्तिकता गुणनो प्रसार करीने अने नास्तिकोमां नास्तिकता गुणनो अपसार—नाश करीने सर्व सफळ थाओ ! आ विचारने लांबा वखत सुधी वारंवार जणावतां वादथी, कदाग्रहथी अथवा भ्रम—संभ्रमथी जे कइ न्यूनाधिक कहेवायुं होय तेथी मने जे दुष्कृत—पाप लाग्युं होय ते तत्त्वतः—खरेखरी रीते मिथ्या हो ! ए प्रमाणे में मननी समाधि माटे यथामति जैनतत्त्वसार स्मृतिमां आण्योछे. अत्र जे कंइ उत्सूत्र थइ गयुं होय ते सुविशुद्ध बुद्धिवाळाए विशोधी लेवुं. श्रीजिनेश्वर भगवंतना वचनोमां ए प्रकारे श्रद्धानो प्रसार करावता में जे धर्म उपार्जन कर्योछे तेवडे समस्त जन कर्म-रहित—सिद्धना जेवा सुखी थाओ !

"उत्तमोत्तम खरतर गण—( गच्छ ) ने धारण करनार युगवर श्रीजिनराजसूरिना साम्राज्यमां तेमना पट्टाचार्य महान् श्रीजिन-सागरसूरि विद्यमान छतां +अमरसर नामे उत्तम नगरमां श्रीशीतल-

---

+ अमरसर ए पंजाबमां सीखधर्मानुयायीओनुं पवित्र स्थान छे. त्यां एक जैन चैत्य—मंदिर छे. तेमां मूलनायक भगवान हाल बीजा छे. प्रथम श्रीशीतलनाथजी मूलनायक हता ते बाजूए पधरावेला छे.

नाथनुं सान्निध्य प्राप्त करीने सूरचंद्रे सुज्ञान माटे आ समर्थ ग्रंथनुं ग्रंथन कर्युंछे. १६७९ वर्षे आश्विन पूर्णिमाए बुधवारे विजययोगे आ प्रश्नोत्तरथी अलंकृत अमल-पवित्र ग्रंथ उत्तम पद्मवल्लभगणिना साहाय्यथी अर्हत्परमात्माना प्रसादरूपश्रीनी प्राप्तिमाटे में वाचक-उपाध्याय *सूरचंद्रविबुधे पूर्ण कर्यो."

आ ग्रंथनी प्रतिलिपि-नकल मने एक भक्त श्रावक तरफथी भेट दाखल मळेली छे. ते ११ पत्रात्मक छे. पत्रनी लंबाइ १० इंच अने पहोळाइ ४॥ इंच छे. पत्रनी दरेक बाजुए १६ थी २१ पंक्ति मूल ग्रंथनी छे. दर पंक्तिमां ५७ थी ७५ अक्षरो छे. उपरनीचे केटलाक उपयोगी पर्यायो आपेला छे. ते एटला तो सूक्ष्म अक्षरे लखेला छे के कोइ कोइ पंक्तिमां १४१ अक्षरो समावी दीधाछे. अक्षरो मनोहर पण महेनत आपे तेवा छे. ग्रंथ संपूर्ण कर्या पछी "लिखितश्च सं. १७१० वर्षे दिल्ली महानगरे पं० रविवर्धनगणिना स्ववाचनकृते" ए प्रमाणे लखेलुं छे. केटलाए भंडारो जोया पण

---

*सूरचंद्रवाचके पोतानी पट्टावली नीचे प्रमाणे आपेलीछे.

( खरतर गच्छनी बृहत् शाखामां. )

जिनभद्रसूरि.
|
मेरुसुंदर पाठक.
|
१ हर्ष-२ प्रिय पाठक.
|
१ चारित्र-२ उदय वाचक.
|
वीरकलश.
|
सूरचंद्रवाचक पद्मवल्लभगणि.

कोइ ठेकाणे आ ग्रंथ जोवामां आव्यो नथी. तेथी तेनी वहु नकलो थइ होय एम लागतुं नथी.

विक्रम संवत् १९६३ ना वर्षमां हुं विहार करतो करतो वडोदरा नजीकना छाणी गामे गयो हतो. त्यां सुश्रावक वैद्यराज मगनलालभाइ चुनीलाल वडोदरावाळा मारी पासे आव्या हता. तेमनी नजरे ए ग्रंथ पडतां ज तेमनामां ज्ञानभक्ति उत्पन्न थवानी साथे ग्रंथनी काव्यरचना साधारण अने क्वचित् दोषित पण छतां तेमांना दृष्टांतो वगेरे आधुनिक केळवणी पामेला लोकोने उपकारक थाय तेवां लागवाथी अति प्रसन्नता पण थइ हती. जो आ ग्रंथ भाषांतर सहित छपाइ बहार पडतां तेनी वाणी रसिक अने भव्यात्माओने उपकार थाय तो मारी ज्ञानभक्ति सफल थाय एवा सरळ भावथी तनमनथी तेमणे खरेखरी महेनत करी मुद्रणार्थे स्वहस्ते तेनी नकल उतारी लीधी अने ते एक ज ग्रंथना आधारे संशोधी तेनो आशय लेइने रसत्यागरूप बाह्य अने अभ्यंतर तपना प्रभावे गूजराती भाषामां अनुवाद पण तैयार कर्यो. मारी इच्छानुसार ते वन्ने भावनगरस्थ श्रीजैनआत्मानंद सभाने प्रसिद्ध करवा माटे अर्पण कर्यां जे प्रसिद्ध थयेलां जोइ मने अत्यानंद थायछे. थोडां वर्ष उपर नेकनामदार महाराजा श्रीमंत सयाजीराव गायकवाडनी आज्ञानुसार ते महाशय तरफथी कुमारपालप्रबंधनुं गूजराती भाषांतर थयुं हतुं. ते ग्रंथ जैन तेमज अन्य जनोने लाभकारी थयेलो छे तेवीज रीते आ ग्रंथ पण विश्वने लाभ कारी थाओ ! श्रीमङ्गलमस्तु !

विहार स्थल—वडोदरा.<br>
मार्गशीर्ष वदि १० गुरुवार.

मुनि कांतिविजय.

# जैनतत्त्वसारः

## श्रीगुरुभ्यो नमः

संशुद्ध[1]सिद्धान्तमथीशमिद्धं[2]
श्रीवर्धमानं प्रणिपत्य सत्यम् ।
कर्मात्मपृच्छोत्तरदानपूर्वं
किञ्चिद्विचारं स्वविदे[3] समूहे[4] ॥ १ ॥
आत्मायमार्याः किल कीदृशोऽस्ति
नित्यो[5] विभु[6]श्चेतनवान[7]रूपी[8] ।

---

१ निर्दोषम् । २ अतिशयैर्दीप्तं । ३ स्वज्ञानाय । ४ विचारयामि । ५ यद्यप्यात्मा द्रव्यास्तिकनयान्नित्यः पर्यायास्तिकनयादनित्यो द्वेधाप्यन्यतरव्यपदेशलाभात् । परमिह तु सकर्माकर्मकरूपसर्वजीवद्रव्यग्रहणोपयोगान्नित्यत्वेन ग्रहणं । ६ व्यापकः केवलिसमुद्घातादौ सर्वलोकाकाशव्यापकत्वात् अन्यथा तु स्वकायमात्रव्याप्तत्वादपि विभुः । ७ चेतनापि द्वेधा सावरणनिरावरणभेदात् । सावरणज्ञानं यथासम्भवं केवलादर्वागन्यत्सर्वं । केवलज्ञानं हि निरावरणं । इह हि चेतनामात्रग्रहणात्सर्वजीवसम्बन्धिज्ञानं गृह्यते तेन सर्वमपि जीवद्रव्यं चेतनवदिति चेतनावान् जीव उच्यते । ८ रूपं सततमस्यास्तीति रूपी सर्वोऽपि पुद्गलधर्मा पदार्थः । न रूपी अरूपी अपुद्गलधर्मा जीवः । यद्यपि तैजसकार्मणशरीरसङ्गतो जीवः सातिशयज्ञानवतां रूपितया प्रत्यक्षस्तथापि चर्मचक्षुषां निरतिशयज्ञानवतामप्रत्यक्षत्वाभासयाऽरूपीत्युच्यते।

*उपर जणावेला सर्व विषयोनुं आ ग्रंथमां प्रश्नोत्तररूपे लोकप्रसिद्ध दृष्टांतो आपीने निरूपण करवामां आव्युंछे.

अतस्तु कर्माणि समग्रलोका-
काशश्रितानीह निरन्तराणि ।
तेनैव जीवा हि भवन्ति कर्मा-
वृता वसूनीव[12] मृदाविलानि ॥ ६ ॥
कथं विभो कर्मण आत्मनश्च
योगोऽयमेषो ऽजनि भिन्नजात्योः[13] ।
अनादिसंसिद्ध इहोच्यते यो
हेमाश्मनोर्वा[14] रणिचित्रभान्वोः ॥ ७ ॥
दुग्धाज्ययोर्वा युगपद्भवो ऽस्त्ययं
यथा पुनः पावकसूर्यकान्तयोः ।
सुधासुधांभृच्छिलयोः[15] सहोत्थितः

---

प्रदेशे ऽनन्तकर्मवर्गणाः सन्तीति । १२ वसूनि स्वर्णानि रत्नानि वा । यथा खन्यादौ स्वर्णानि रत्नानि वा समुत्पद्यमानानि मृदा मृत्तिकया सह व्याप्तानिविच्छन्नानीव समुत्पद्यन्ते तथा जीवा अपि संसारस्थाः कर्मावृता एव भवन्तीति सम्बन्धः । १३ जीवानामरूपित्वात् कर्मणां रूपित्वात् भिन्ना जातिः स्वभावः सत्ता वा ययोस्तौ भिन्नजातौ तयोः संयोगो ऽनादिसंसिद्धः अनादुत्पन्न इत्यर्थः । १४ कयोरिव हेमाश्मनोरिव स्वर्णपाषाणयोरिव [illegible] योरथवा [illegible] योरथवा गुरुलघ्वोरथवा स्निग्धास्निग्धयोरथवा एभिः प्रकारैर्भिन्नजात्योरेवमन्येषामपि पदार्थानां यथासम्भवं भिन्नजातित्वं स्वयमूह्यं । १५ च-

तथा च कर्माणि तु कीदृशानि
जडानि रूपीणि[9] चयापचयीनि ॥ २ ॥
जीवाः[10] पृथिव्यादिमसूक्ष्मवृद्ध-
निगोदभिन्ना हि भवन्त्यनन्ताः ।
नानाविधावाससजातियोनि-
भिन्नाः समस्ताः किल केवलीक्ष्याः ॥ ३ ॥
कर्माणि तेभ्यो यदनन्तकानि
समग्रलोकाम्बरसंस्थितानि ।
घनं किमङ्ग्येकतरप्रदेशे
ऽप्यनन्तसङ्ख्यानि शुभाशुभानि ॥ ४ ॥
अनन्तसङ्ख्याः किल कर्मवर्गणा
जीवप्रदेशे परिकल्प्य[11] एकके ।
शुभाशुभाः केवलदृष्टिदृष्टा
मुक्ता अमूभ्यः खलु ते हि सिद्धाः ॥ ५ ॥

---

९ पूरणगलनस्वभावानि । १० जीवाः कथम्भूताः । पृथिवी आदिमादिर्येषां ते पृथिव्यादिमाः षट्कायिकास्ते च ते सूक्ष्माश्च वृद्धाश्च ते तथा । विशेषणविशेष्यभावस्य विवक्षानिबन्धनत्वात् सूक्ष्मवृद्धशब्दयोर्विशेष्यतयोपादानेन परनिपातो ऽतः पृथिव्यादयो द्विधा सूक्ष्मा वादराश्च । निगोदा हि निगोदसञ्ज्ञावंतस्ते ऽपि सूक्ष्मा वादराश्च । तैर्भेदैर्भिन्ना ये ते तथा । यद्वात्र सूक्ष्मवृद्धशब्दौ पृथिव्यादिमनिगोदशब्दयोरन्तरस्थितौ डमरुकमणिवत् पृथिव्यादिषु निगोदेषु योज्यौ । ११ एकस्य जीवस्यासङ्ख्याताः तेषामेकस्मिन्नपि मनोबुद्ध्या परिकल्प्ये

अतस्तु कर्माणि समग्रलोका-
काशश्रितानीह निरन्तराणि ।
तेनैव जीवा हि भवन्ति कर्मा-
वृता वसूनीव मृदाविलानि ॥ ६ ॥
कथं विभो कर्मण आत्मनश्च
योगोऽयमेषो ऽजनि भिन्नजात्योः ।
अनादिसंसिद्ध इहोच्यते यो
हेमाश्मनोर्वारणिचित्रभान्वोः ॥ ७ ॥
दुग्धाज्ययोर्वा युगपद्भवो ऽस्त्ययं
यथा पुनः पावकसूर्यकान्तयोः ।
सुधासुधांभृच्छिलयोः सहोत्थितः

---

प्रदेशे अनन्तकर्मवर्गणाः सन्तीति। १२ खनौ स्वर्णानि रत्नानि वा। यथा
खन्यादौ स्वर्णानि रत्नानि वा समुत्पद्यमानानि मृदा मृत्तिकया सह
व्याप्तान्यवच्छन्नानीव समुत्पद्यन्ते तथा जीवा अपि संसारस्थाः क-
र्मावृता एव भवन्तीति सम्बन्धः। १३ जीवानामरूपित्वात् कर्मणां
रूपित्वात् भिन्ना जातिः स्वभावः सत्ता वा ययोस्तौ भिन्नजाती तयोः
संयोगो ऽनादिसंसिद्धः अनादृत्पन्न इत्यर्थः। १४ कयोरिव हेमाश्म-
नोरिव स्वर्णपाषाणयोरिव मणिजन्यकान्तिजलकणयोरथवा हुतवह्नयोरथवा
गुरुलघ्वोरथवा स्निग्धास्निग्धयोरित्यादिभिः प्रकारैर्भिन्नजात्योरेव-
म्भूतानामपि पदार्थानां यथासम्भवं भिन्नजातित्वं स्वयमूह्यम्। १५ य-

कर्तुर्गुणानामथ कर्तृवादिनाम् ॥ ८ ॥
कर्मात्मनोरेवमनादिसिद्धो
योगोऽस्त्ययं केवलिनः समूचुः ।
अस्यापि भेदो विदितस्तथाविधात्
सामग्र्ययोगात्कनकाश्मनोरिव ॥ ९ ॥

इति जैनतत्त्वसारे जीवकर्मविचारे सूरचन्द्रमनःस्थिरीकारे
जीवकर्मस्वभावोक्तिलेशः
प्रथमोऽधिकारः ॥

---

न्द्रकान्तयोः । १६ ये तु जगतः सकर्त्तृत्वमाहुस्तेषां कर्त्तृवादिनां मते यथा कर्त्तुर्गुणानां च सत्त्वादीनां मिथः सम्बन्धो ऽनादिसंसिद्धः । न हि निर्गुणः कर्त्ता जगत्करणे समर्थो भवितुमर्हति कर्त्तुर्निःक्रियत्वा-न्निरञ्जनत्वात् सगुणत्वं न स्यात् तदभावे च कर्त्तृत्वं न सम्भवतीति; एवमपि न वक्तुं शक्यं यत्कर्त्ता सृष्टिकर्माणि प्रवृत्तः सगुणो ऽन्यथा निर्गुणः एवमुच्यमाने सति कर्त्तुरनेकस्वभावत्वादनित्यत्वं तथा तु कर्त्तु-रभावः स्यात्, इदं तु कर्त्तृवादिनां न मतं; तन्मते च कर्त्तारं सगुणत्वं निर्गुणत्वं च द्वयमपि वक्तव्यं यथा निरञ्जने निःक्रिये कर्त्तारि सगुण-त्वमन्तर्लीनं तथात्मन्यपि कर्मसंयोगः । १७ पूर्वं हेम पश्चात्पाषाणो ऽथ-वा पूर्वं पाषाणः पश्चात्कनकं इत्यादिको भेदः क्वापि न वक्तुं शक्यः द्वयोरपि समसमय एव सम्बन्धस्ततोऽयमेषु वस्तुषु अनादिसंसिद्धो यथा सम्बन्धः तथा जीवकर्मणोरपि अनादिसंसिद्धः सम्बन्धः इति भि-न्नजात्योरपि स्वयंभाव्यः ।

# द्वितीयोऽधिकारः

तादृक्स्वभावान्नियतेर्भविष्यत्--
कालाच्छुभाशोभनभुक्तिहेतोः ।
जीवस्तु कर्माणि समाददीत
शुभाशुभानीह पुरःस्थितानि ॥ १ ॥

कर्माणि योगीन्द्र जडानि सन्ति
तानि स्वयं नाश्रयितुं क्षमन्ते ।
आत्मा तु बुद्धः स्वयमेव जानन्
कर्माण्यशस्तानि कथं हि लाति ॥ २ ॥

को नाम विद्वानशुभं हि वस्तु
गृह्णाति मत्वा किल यः स्वतन्त्रः ।

---

१८ जीवकर्मणोरनादित्वादयमनादिसिद्धः संयोगः तथापि पुराणानि कानिचित्कर्माणि क्षपयति कानिचिन्नवानि गृह्णाति इति सम्बन्धमायातोऽयं द्वितीयः कर्मग्रहणाधिकार उच्यते । तादृक्स्वभावाद् इत्यादि । जीवः पुरःस्थितानि यथायोगं प्राप्तानि शुभाशुभानि कर्माणि समाददीत गृह्णीयादिति तत्र हेतुत्रयमाह । तादृगिति जीवस्य कर्मग्रहणस्वभावात् पुनश्च नियतेरवश्यंभावात् नियतिर्भगवती बलीयसी इत्युक्तेः तादृशात् भाविनः कालात् । चकाराकरणमत्र त्रयाणामप्येषां समुदितानामसद्भावादेकाभाव एतानः पारम्पर्यादभेद एवेति न चकारः । कीदृशादस्मादपि हेतुत्रयादपि । शुभाशो० सुखदुःखभोगकारणतः । अत एव नियतिस्वभावकालैः सम्यग् तादृशानि कर्माणि पुरतः

सत्यं विजानन्नपि भावितादृक्-
कालादिनोदादशुभं हि लाति ॥ ३ ॥
तथा हि कश्चिद्धनवानपीह
खादेद्धविष्याग्नियातिप्रणुन्नः ।
खलं विबोधन्नपि मोदकादि-
स्वादिष्टवस्तूनि यतः स्वतन्त्रः ॥ ४ ॥
अनन्यमार्गश्च तथैव कश्चित्
स्थानं निजेष्टं प्रययासुराशु ।

---

प्रापितानि तादृशानि गृह्णातीति पारवश्यं जीवस्य जैनैर्व्यज्यते । तथा चोच्यते तादृशा जायते बुद्धिर्व्यवसायश्च तादृशः । सहायास्तादृशा एव यादृशी भवितव्यता ॥ इदं हि शास्त्रं प्रायः पृच्छकशैवाभिप्रायमाश्रित्योक्तमस्ति । शैवा हि जैनानिति वदन्ति । भो जैनाचार्याः जीवोऽयं सुखैषी सन् शुभानि कर्माणि जानन् गृह्णातु परमसौ दुःखद्वेषी सन् अशुभानि कर्माणि कथं गृह्णाति । अतोऽशुभानि कर्माणि ग्रहीतुमनिच्छतोऽस्य कश्चिदीश्वरादिरशुभकर्मग्रहणे प्रेरको वाच्यो यथा सर्वं भवन्मतं समञ्जसं स्यादिति पृच्छन्तं शैवजनं समधिगम्य जानतोऽपि जीवस्य प्रेरकादि विनैव शुभकर्मग्रहणवदशुभकर्मग्रहणं वर्तते इति निगदन् जैनाचार्यः शैवादिकं प्रत्युत्तरयति सत्यं विजानन्नित्यारभ्या नवमकाव्यपूर्वार्धपर्यन्तग्रन्थेनेत्यादि स्वयं ज्ञेयं । १९ कालो सहाव नियइ पुव्वकयं पुरिस्स कारणे पंच । समवाए सम्मत्तं एगंते होइ मिच्छत्तं ॥ भावितः भविष्यतो ये तादृशाः सुखदुख हेतवः कालादयः पंच तेषां नोदः प्रेरणं तस्मात् ।

शुभाशुभान्स्थानभरान्विजानन्
विलङ्घते स्वीय[20]पदाप्तिनोदात् ॥ ५ ॥

तथा च चौराः परदारगा अपि
व्यापारिणो दर्शनिनो द्विजास्तथा ।
विदन्त एते हि तथा[21]विधायतेः
शुभाशुभं कर्म समाचरन्ति ॥ ६ ॥
भिक्षुस्तथा वन्दि[22] ऋषिश्च[23] भिक्षां
स्निग्धां[24] च रूक्षां[25] परिबुध्य[26] भुङ्क्ते ।
शूरस्तथा युद्धगतो ऽवगच्छन्
शत्रूनशत्रूंश्च निहन्ति रोषे[27] ॥ ७ ॥
रोगी यथा वा निजरोगशान्ति-
मिच्छन्नपथ्यं ह्यपि सेवते ऽसौ ।
रोगाभि[28]भूतत्ववशादपायं[29]
जानन्स्वयम्भाविनमात्मगामिनम् ॥ ८ ॥
एवं हि कर्माण्यसुमान्[30]विलाति

---

२० स्वकीयस्थानकप्राप्तिप्रेरणात् । २१ तथाविधशुभाशुभहेतु भविष्यत्कालात् । २२ वन्दी शब्दस्य ङ्यापोः इति पाणिनीयसूत्रेण ह्रस्वे कृतेऽस्य पाठः । २३ ऋषिस्तु तत्त्ववित् योगविदिति । २४ स्निग्धामर्थात् स्वादिष्टां मृष्टां मनमाणिनिवावन् । २५ रूक्षामुक्ताविपरीतां स्वस्मिन्नरुचितां स्वभक्तानितां भिक्षारूपामिति । २६ ज्ञात्वा । २७ रोषे गदरोषादिके । २८ पारवशात् । २९ कष्टं । ३० जीवः ।

शुभाशुभानि प्रविदन्नवश्यम् ।
जीवस्य कर्मग्रहणे स्वभावो
ज्ञानं[31] विनाप्यस्ति निदर्शनं यत् ॥ ९ ॥
यथैव लोके किल चुम्बको ऽप्ययं
संयोजकैर्योजितमंजसा भृशम् ।
सारं[32] तथा ऽसारमयो[33] ऽविचारितं
गृह्णाति येनाव्यवधानमात्मनः[34] ॥ १० ॥
कालात्मभाव्यादिनियोजितान्यहो
स्वभावशक्तेश्च शुभाशुभानि यत् ।
कर्माणि सामीप्यसमाश्रितान्यय-
मात्मापि गृह्णाति तथाविचारितम् ॥ ११ ॥

इति जैनतत्त्वसारे जीवकर्मविचारे सूरचन्द्रमनःस्थिरीकारे
जीवस्य शुभाशुभकर्मग्रहणोक्तिलेशो
द्वितीयो ऽधिकारः ॥

---

३१ ज्ञानं विनापि जैनाभिप्रायेण जीवस्य ग्रहणस्वभावोऽस्ति अत्र दृष्टान्तो यथा लोके किलेत्यादि । ३२ लोहं कान्ताविद्युत्सारादि । ३३ मुण्डादि । ३४ येन सारेण लोहेनाथवासारेणलोहेन सहात्मनः स्वस्याव्यवधानं अन्तरं नास्ति ।

# तृतीयो ऽधिकारः

स्वामिन्ननाकारतया हि जीवो
निरिन्द्रियः केन च लाति कर्म ।
निरीक्ष्य पूर्वं तत [३५]आत्मलेयं
[३६]पाण्यादिना [३७]आददते पुमांसः ॥ १ ॥

आत्मा तु नेदृक्, घटते न चैतत्
सत्यं, विनापीन्द्रियतो ऽप्यथात्मा ।
[३८]भाव्याश्रितं कर्म समाददीत
शक्तेः स्वभावाच्च शृणु स्वरूपम् ॥ २ ॥

यथेन्द्रियाकारविवर्जितो [३९]ऽयं
कर्ता शृणोत्येव निजाङ्घ्रिजापम् ।
भक्तं निरीक्ष्याथ विलाति पूजां
पाणिं विना चोद्धरतीह भक्तान् ॥ ३ ॥

पापं हरत्याशु कृतं स्वकैर्य-
दनन्तशक्तेः सहजात्तथात्मा ।

---

३५ आत्मना लेयं ग्राह्यं यद्वस्तु स्यात्तद्वस्तु पाण्यादिना नियत माददते इत्यर्थः। ३६ करादिना। ३७ गृह्णन्ति। ३८ भविष्यत्कालभोगार्हं भाविनव्यनाश्रितं। ३९ अयमिति कर्त्रादिलोकप्रसिद्धः कर्ता।

लोके यथा वा गुडको[40] रसस्य[41]
सिद्धो निरीक्ष्येन्द्रियपाणिमुक्तः ॥ ४ ॥
दुग्धादिपायी त्रपुनीरशोषी
स शब्दवेधी बलशुक्रदश्च ।
सूतोऽपि चैतत्कुरुते निरक्षो
जीवस्तु शक्तो न करोति किं किम् ॥ ५ ॥
वनस्पतीनामपि वा यथाहृति[42]
र्यन्नालिकेर्य्यादिषु[43] दृश्यतेऽपि च ।
यद्वा घनं किं किल वस्तु सर्वं
सङ्गृह्य नीरं स्वयमार्द्रितं स्यात् ॥ ६ ॥
न चेति वाच्यं पयसोऽस्ति शक्ति-
स्तद्भेदने यद्व्यभिचारितास्ति ।
न भेदनं मुद्गशिलासु तद्वत्
धान्येऽम्भसः किं कङ्कुकौ[44] न भेद्याः ॥ ७ ॥
सिद्धं तथेदं ग्रहणीयमेव
वस्त्वत्र यस्यास्ति तदेव लाति ।

---

४० गुटिका । ४१ पारदस्य । ४२ आहारः । ४३ वनस्पतीनामपि पाण्यादि विनैवाहारग्रहणं दृश्यते तच्च लाङ्गल्यादिषु गृहीतमपि समीक्ष्यते तन्मूले जलसेचनात्तत्फले जलाधानं प्रत्यक्षतयोपादीयते ४४ करडूकणाः ।

किं चुम्बको लोहमथोज्झ्य धातू-
नन्यांश्च गृह्णाति तथास्वभावात् ॥ ८ ॥
अप्येवमात्मा परपुद्गलोत्करान्[४५]
विहाय गृह्णाति हि कर्मपुद्गलान् ।
यादृक्ष यादृक्ष भविष्यदायति[४६]
तादृक्षसम्प्रेरणपारवश्यतः ॥ ९ ॥
सुप्तो यथा वा किल कश्चिदङ्गभृत्
स्वप्नान् प्रपश्यन् कुरुते सर्वाः[४७] क्रियाः ।
नोइन्द्रियेणैव[४८] न तत्र किञ्चने-
न्द्रियद्वय[४९]प्राणमहो प्रवर्त्तते ॥ १० ॥
जीवस्तथा कर्मभरं हि लाति
स्वप्नो भ्रमोऽयं ननु मैवमाख्यः ।
महत्तमे तस्य[५०] फले च दृष्टे
मा ब्रूहि यत्स्वप्नमेयं[५१] स्मरत्यहो ॥ ११ ॥
यथा गृहीतं न हि कर्म स[५२] स्मरेत्
न स्मर्यते प्रायश एव दृष्टः ।

---

४५ कर्मणः सकाशात् भिन्नान् पुद्गलनिकरान् विहाय कर्मपुद्गलान् गृह्णाति। ४६ उत्तरकालः। ४७ सर्वाः। ४८ मनसा। ४९ बुद्धीन्द्रियक्रियेन्द्रियलक्षणेन्द्रियद्वयबलं विना मनो नास्तीति। बुद्धीन्द्रियाणि स्पर्शनादिपञ्च। क्रियेन्द्रियाणि करपादादिपञ्च। ५० स्वप्नस्य ५१ स्वप्नदर्शको नरः। ५२ कर्मग्राहको जीवः।

स्वप्नस्तथा कर्मभरोऽपि चार्त्तः[53]
कश्चित्स्मरेत् स्वप्नमिमं यथेक्षितम् ॥ १२ ॥
कर्म स्मरेत् ज्ञान[54]विशेषतस्तथा
प्रधानपुंसेक्षित एव यद्वत् ।
स्वप्नो यथार्थः फलतीह नूनं
तथैव कर्मात्तमिदं कृतार्थम् ॥ १३ ॥
स्यादङ्गिनः संशय एव नात्र
व्यर्थीभवत्स्वप्नभरस्य जन्तोः ।
स्वप्नो यथा केवलिनस्तथास्ति
कर्मग्रहस्तत्क्षणनाशतो यत् ॥ १४ ॥
तथा निजात्मन्यपि पश्यतोऽत्र
सम्मील्य चेतः परिकल्प्य सुस्थम् ।
उत्पत्तिकालादवसानसीमा-
मात्मा सृजेत्कार्मण[55]तैजसाभ्याम् ॥ १५ ॥
गर्भस्थितः शुक्र[56]रजोन्तरागतो
यथोचिताहारविधानतो द्रुतम् ।
धातूंश्च सर्वानपि सर्वथा स्वय-
मात्मा विधत्तेऽत्र विना[57]क्षवीर्यतः ॥ १६ ॥

---

५३ गृहीतः । ५४ यथा वा चौरादिकः कश्चिदपराधी बन्धनं प्राप्तो निजाचरितचौर्यादि स्मरति ज्ञानादेव साधुरपि पूजां प्राप्तः स्वशुभाचारं स्मरति ज्ञानात् । ५५ शरीराभ्यां । ५६ वीर्यरक्तमध्य । ५७ इन्द्रियबलादिनापि ।

गर्भात्कृते जन्मनि सर्वदैव
गृह्णन् किलाहारमथोपलब्धम् ।
ततस्[५८]ततस्तत्परिणामतः स्वयं
धात्वादि संपाद्य करोति पुष्टिम् ॥ १७ ॥

तथाहृतिं रोमभि[५९]रादधद्यकः
खलं परित्यज्य रसान् समाश्रयेत् ।
पुनः पुनः प्रोज्झति तन्मलं बलात्
दधद्रजःसात्विकतामसान् गुणान् ॥ १८ ॥

सज्ज्ञानविज्ञानकषायकामान्
हिताहिताचारविचारविद्याः ।
रागान् समाधींश्च दधान एव-
मास्ते कथं सक्रिय एष देहे ॥ १९ ॥

किं देहमध्येऽस्य करेन्द्रियादिकं
समस्ति येनैवं[६१] करोति तादृशम् ।
विवेचनं[६२] प्राप्य च वस्तु तादृशं[६३]
प्रासावधि[६४]र्याति गृहेश्वरो यथा ॥ २० ॥

यदा[६५]दृशोऽपौद्गलिकोऽप्यमूर्तो

५८ तस्मात्तस्मात्तस्याहारस्य विपाकवशात् इत्यर्थः । ५९. देहवाहिदेश्य-मानानवयवान्परतोमगणैराकृष्य । ६० राजस । ६१ पाणीन्द्रियादिना । ६२ पृथक्करणं । ६३ आहारादि । ६४ पूर्णकालः । ६५ पौद्गलस्वभावात् ।

निराकृतिः सक्रिय[66] एष जीवः ।
देहस्य मध्ये स्थित एव सर्व-
मङ्गं परिव्याप्य करोति कृत्यम् ॥ २१ ॥
द्रव्याणि रूपीणि[67] गुरूणि तद्वत्
सूक्ष्माणि[68] वा लाति पुंरान्तरासुमान्[69] ।
कर्माणि तत् सूक्ष्मतमानि नो कथं
गृह्णात्ययं तैजसकार्मणाङ्गतः ॥ २२ ॥
जीवः पुनारूपकरादिवर्जित
ईदृग्वपूरूपि कथं प्रवर्तयेत् ।
आहारपानादिक इन्द्रियार्थके
शुभाशुभारम्भककर्मणीह ॥ २३ ॥
चेदिन्द्रियैः पाणि[70]मुखैरथाङ्गैः[71]
समाः क्रियाः स्युर्भविनं विनैव ।
तदा समस्ताः कुणपैर[73]जन्तुकैः
क्रियाः क्रियन्ते न कथं करेन्द्रियैः ॥ २४ ॥
सिद्धं तथैतद्यदशं[74]स्तशस्तं

---

६६ अमूर्तः सन् सक्रिय इत्यचिन्त्यशक्तिरयं जीवः । ६६ किं किं कृत्यं करोतीत्याह । गुरूणि द्रव्याणि आहारपानादीनि । ६८ सूक्ष्माणि रागद्वेषादीनि । ६९ देहमध्यजीवः । ७० हस्तादिकैः । ७१ अवयवैः । ७२ भवोऽस्यास्तीति भवी जीवस्त । ७३ मृतकैः । ७४ अप्रशस्तं कषायमत्सरानिन्दाद्रोहशोकमोहादिकं कर्म तथा मल्लोज्झना

कर्मात्मनैव क्रियते न चाङ्गैः[75] ।
अरूपिणा रूपि ततश्च कर्म
सूक्ष्मं कथं नाम न गृह्यते तत् ॥ २५ ।
ध्यानी पुनर्बाह्यगतेन्द्रियैर्विना
करोति कर्माणि यथेप्सितानि यत् ।
जिह्वां विना ध्यायति मानसं जपं
शृणोति तं तं श्रवसी[76] ऋते तदा[77] ॥ २६ ॥
विना जलैः पुष्पफलैश्च दीपैः
सद्भावपूजां सफलीकरोति ।
ध्यात्वाऽथ ब्रह्मापि च ब्रह्मवादी
न ब्रह्मतामपि[78] लभेऽङ्गिनां[79] खैः ॥ २७ ॥
जीवोऽयमेवं करणैः करादिभि-
र्विनैव कर्माणि समाश्रयत्यलम् ।
अचिन्त्यशक्त्या नियतिस्वभाव-
कालैश्च जात्या[80] च कृतप्रणोदैः[81] ॥ २८ ॥
कर्माणि जीवैकतरप्रदेशे
ऽप्यनन्तसङ्ख्यानि भवन्ति चेत्तदा ।
कथं न दृश्यानि हि तानि पिण्डी-
भूतानि दृष्ट्या निगदन्तु कोविदाः ॥ २९ ॥

दि या कर्म. गम्नं च कर्म ज्ञानादिरत्नग्रहणध्यानादिसम्पादनगुण-
ग्रहणभगवत्स्मरणाद्यनेकं । ७५ अङ्गैः कर्णादिकेन्द्रियरूपैः पाणिपादा-
दिकैश्चावयवैरिति । ७६ जापादिकं आरम्भं । ७७ तस्मिन्जापसमये अ-
न्तरात्मनैव श्रवसी कर्णादि विनैव शृणोत्ययमात्मा । ७८ एष ब्रह्मवादी
ब्रह्मध्याता । ७९ इन्द्रियैः । ८० तथाविधनरजन्मादिना । ८१ प्रेरणैः ।

सत्यं कृतिन् सूक्ष्मतमानि तानि
पश्यन्ति नो चर्मदृशो हि मादृशाः ।
ज्ञानी तु सज्ज्ञानदृशो भृशोदया-
त्पश्येद्यथात्रैव निदर्शनं शृणु ॥ ३० ॥

पात्रे च वस्त्रादिषु गन्धपुद्गलाः
सौगन्ध्यदौर्गन्ध्यवतो हि वस्तुनः ।
ज्ञेया न ते तेन हि पिण्डभावं
गता अपीक्ष्या नयनादिभिस्तु ॥ ३१ ॥

ज्ञानेन जानात्ययमेवमेतं
कर्मोच्चयं जीवगतं तु केवली ।
तथा पुनः सिद्धरसान्निपीतं
स्वर्णादि नो तत्र दृशाभिदृश्यते ॥ ३२ ॥

यदा तु कश्चिद्रससिद्धयोगी
कर्षेद्यदैतन्ननु तस्य सत्ता ।
एवं हि कर्माण्यपि जीवगानि
ज्ञानी विजानाति न चापरोऽत्र ॥ ३३ ॥

इति जैनतत्त्वसारे जीवकर्मविचारे सूरचन्द्रमनःस्थिरीकारे
ऽमूर्तस्याप्यात्मनो मूर्तकर्मग्रहणतात्पिण्डादर्शन-
निरूपणोक्तिलेशस्तृतीयो ऽधिकारः ॥

---

८२ दृष्टेः । ८३ यदि सुगन्धदुर्गन्धपुद्गलाः पुद्गलात्मके पात्रादिके वस्तुनि स्थिता न दृश्यास्तर्हि अपुद्गलात्मके आत्मनि अतिसूक्ष्माः कर्मपुद्गलाः कथं दृश्याः इत्यर्थः । ८४ अयं प्रसिद्धा सर्वविज्ञातः केवली ।

# अथ चतुर्थोऽधिकारः

कर्माणि मूर्त्तान्यसुमान्[८५]अमूर्त्तः
साकृत्य[८६]नाकृत्यभियुक्तिरेषा ।
न्याय्या कथं येन हि वस्तु भिन्नं[८७]
नाधार[८८]काधेयकतां लभेत ॥ १ ॥

आकर्ण्यतामुत्तरमस्य विज्ञाः
कर्मस्वभावादथ जीवशक्तेः ।
गुणाश्रयो द्रव्यमिति प्रवादात्[८९]
संसारिजीवस्य गुणस्तु कर्म ॥ २ ॥

यद्वा हि ये केचन विश्वमेतत्
सकर्तृकं प्राहुरहो समस्तम् ।
कल्पान्त[९०]काले महति प्रवृत्ते
भाव्येव[९१] लीनं[९२] खलु विष्णु[९३]नाम्नि ॥ ३ ॥

---

८५ जीवः । ८६ साकारनिराकार । ८७ मूर्त्तामूर्त्तत्वभेदेन भिन्नमपरजातीयं । ८८ ततोऽमूर्त्तोरूपाधारआत्मा मूर्त्तानां रुपिणां कर्मणां कथमाधेयभावं धार्यतां प्राप्नोतीति पृच्छकाशयः । ८९ प्रसिद्धो वादः प्रकृष्टो वा वादः प्रवादः वहुतरतार्किकजनोक्तिस्तस्मात् यथा हि सिद्धात्मनः सम्यग्ज्ञानदर्शनचारित्राणि गुणाः सिद्धस्यापि जीवद्रव्यत्वात् तथा संसारिजीवस्य सकर्मणः कर्म गुणः स्यात् जीवद्रव्यत्वात् । ९० महाप्रलये । ९१ भावि भविष्यति । ९२ लीनं स्थायि । ९३ कर्त्तरि ।

तदा यथा भूतगणा गुणाश्च<br>
स्थास्यन्ति लीना ननु कर्तृनाम्नि[९४] ।<br>
यद्वा नभोऽमूर्त्तमिदं गुरोर्[९५]लघो[९६]-<br>
र्मूर्त्तस्य[९७] चामूर्त्तिमतो[९८] निरन्तरम् ॥ ४ ॥<br>
अर्थस्य[९९] सर्वस्य[१००] यथा विचक्षणा<br>
आधारमाख्यन्त्यविनश्वरं महत् ।<br>
कथं तथात्मैष न रूपवानपि<br>
रूपीणि[१] सर्वाणि[२] वहत्यनारतम् ॥ ५ ॥<br>
मिथ्यात्वदृष्टिभ्रमकर्ममत्सराः<br>
कषायकन्दर्पकला[३] गुणास्त्रयः[४] ।<br>
क्रियाः समग्रा विषया अनेकधा<br>
किं किं न धत्तेऽत्र वपुर्गतोऽप्ययम्[५] ॥ ६ ॥<br>
मावोच एतद्धि शरीरजा गुणा<br>
अमी यतोऽस्मिन् गतपंचके घने[६] ।<br>
दृश्यन्त एते[७] न हि केचनाश्रिता-

---

९४ विष्णुनाम्नि ब्रह्मनाम्नि वा । ९५ गुरोर्गरिष्ठस्य धराधरकारस्कराम्भोधिरूपरूपिद्रव्यस्य । ९६ लघिष्ठस्य घनवाततनुवातपरमाणुत्रसरेण्वर्कतूलादिरूपरूपिसूक्ष्मद्रव्यस्य । ९७ मूर्त्तस्य सर्वरूपिद्रव्यस्य । ९८ अमूर्त्तस्य सिद्धधर्माधर्मास्तिकायादेः । ९९ द्रव्यस्य । १०० सर्वस्य द्रव्यस्य सर्वस्य धर्माधर्मजीवपुद्गलास्तिकायलक्षणस्य । १ द्रव्याणि २ वस्तूनि । ३ पुरुषस्त्रीसम्बन्धिसर्वकलामीलने १३६ कला भवन्ति । ४ सत्वादयः । ५ आत्मा । ६ शरीरे । ७ गुणाः ।

स्ततो वपुर्गा न गुणास्तु जीवगाः ॥ ७ ॥
संदृश्यमानं पुनरीदृशं वपु-
रदृश्य एवैष भवी दधाति चेत् ।
[८]अरूपिरूपिद्वयसङ्गमो ह्यसौ
विचार्यमाणः कुरुते न कौतुकम् ॥ ८ ॥
कर्पूरहिङ्ग्वादिकसुष्टुदुष्टु-
वस्तूत्थगन्धा गगनं श्रिता यथा ।
तिष्ठन्ति [९]यावत्स्थिति तद्वदेव भोः
कर्माणि जीवं परि[१०]वृत्य सन्ति ॥ ९ ॥
इ[११]त्यादिभिर्दृष्टनिदर्शनैस्तथा-
[१२]गुणात्मकैः कर्मभिरेष आत्मकः ।
आश्रीयते निर्गुणकोऽपि निश्चित-
मात्मा ततः [१३]कर्मचितो [१४]भवी भवेत् ॥ १० ॥

इति जैनतत्त्वसारे जीवकर्मविचारे सूरचन्द्रमनःस्थिरीकारे
मूर्त्तामूर्त्तयोः कर्मात्मनोराधाराधेयभावसम्बन्धोक्ति-
लेशश्चतुर्थोऽधिकारः ॥

---

८ अरूपी जीवः रूपीणि देहतदाश्रिताङ्गकर्मक्रियादीनि शोषपोषस्निग्धरुक्षादिदेहधर्मा वा तेषां यद्द्वयं यमलं तस्य सङ्गमः सम्बन्धः । ९ यावत्कालं यस्य यादृशी स्थितिर्वर्तनं स्थितिकालमित्यर्थः । १० आश्रित्य । ११ दृष्टान्तैः । १२ स्वरूपैः । १३ युक्तः । १४ कर्मयुक्तो भवी संसारी भवेत् कर्ममुक्तस्तु तद्व्यतिरिक्तः सिद्धो भवेदिति व्यतिरेकद्वारेण पूरणीयं ।

# पञ्चमो ऽधिकारः

चेदाश्रयाश्रेयकभाव[15] एवं
सिद्धोऽस्ति कर्मात्मकयोरवश्यम् ।
जीवास्तु सिद्धा अपि सन्त्यनन्त-[16]
चतुष्टयेद्धाः परमेष्ठिसञ्ज्ञाः[17] ॥ १ ॥
पृच्छामि पूज्याः खलु तर्हि सिद्धा-
त्मानो न कर्माणि समाददन्ते[18] ।
कथं तदेषामपि[19] सौख्यसत्त्वा-
ल्लांतां[20] सुकर्माणि निषेधकः कः ॥ २ ॥
सत्यं यतस्तैजसकार्मणाख्य-[21]
शरीरयोगस्य विनाशभावः ।

---

१५ आधाराधेयभावः । १६ अनन्तज्ञानानन्तदर्शनानन्तसुखा-नन्तवीर्यलक्षणानन्तचतुष्टयेनेद्धाः दीप्ताः प्रसिद्धा वा । १७ परमे पदे-तिष्ठन्तीति परमेष्ठिनः सैव सञ्ज्ञा येषां ते तथा । १८ समाददन्ते समाङ्पूर्वो ददिरयं भौवादिकः गृह्णन्तीति । १९ तत्तस्मात्कारणात् एषां सिद्धजीवानामपि कर्माणि गृह्णताम् । २० गृह्णताम् । २१ तेन तैजसकार्मणलक्षणकर्मग्रहणयोग्यशरीराभावेन शोभनकर्मणां ग्रहणस्या योगादसम्बन्धादभावादित्यर्थः सिद्धात्मानो न कर्माणि लान्तीत्युत्त-रसूत्रेण सम्बन्धः एवं सर्वैरपि हेतुभिर्वाक्यपरिसमाप्तिः कर्त्तव्येति ।

सुकर्मणां तेन गृहीत्ययोगा-
ज्ज्योतिश्चिदानन्दभरैश्च तृप्त्याः ॥ ३ ॥
सुखासुखप्रापणहेतुकाल-
प्रयोक्त्रभावादथ निष्क्रियत्वात् ।
यद्वाप्यनन्तानि सुखानि तेषां[२२]
कर्माणि सान्तानि भवन्त्यमूनि ॥ ४ ॥
इतीव [२३]तत्सौख्यभरस्य कर्म
हेतुर्भवन्नो यदतुल्यमानात् ।
इत्यादिकैर्हेतुभिरेव सिद्धा-
त्मनो न कर्माणि हि लान्ति नित्याः ॥ ५ ॥
लोके यथा क्षुत्तृषया विमुक्ता-
त्मनः सुतृप्तस्य न तृप्तिकालम् ।
जितेन्द्रियस्याप्यथ योगिनोऽपि
तुष्टस्य किञ्चिद्ग्रहणे न वाञ्छा ॥ ६ ॥
यद्वा न पात्रे परिमाति किञ्चित्
पूर्णे तथा सिद्धिगता हि सिद्धाः ।
सदा चिदानंदसुधाप्रपूर्णा
गृह्णन्ति नो किञ्चिदपीह कर्म ॥ ७ ॥

---

२२ सिद्धजीवानां । २३ तेषां सिद्धात्मनां यदनन्तं सौख्यं तद्भरस्य ।

तथा च सिद्धेषु सुखं यदस्ति
त[२४]द्वेद्यकर्मक्षयजं वदन्ति ।
*तत्कर्म हेतुर्न हि सिद्धसौख्ये
यत्कर्म सान्तं सुखमेष्वनन्तम् ॥ ८ ॥

यद्विश्ववृत्तान्तसमुत्थनृत्त-
प्रे[२५]क्षाप्रभूतं सुखमाश्रितानाम् ।
सिद्धात्मनां नित्यसुखं प्रवर्त्तते
यथा नृणामद्भुतनृत्यदर्शिनाम् ॥ ९ ॥

सिद्धेषु पूज्या न किल क्रियेन्द्रियं
बुद्धीन्द्रियं नो न च किञ्चनाङ्गम् ।
अनन्तसौख्यं कथमाप्यते तै-
र्यज्ज्ञानमेतेष तदेव सौख्यम् ॥ १० ॥

यथेह लोके किल कश्चिदङ्गी
ज्वरादिबाधाविधु[२६]रैः कदाचित् ।
निद्रां प्रकुर्वन्निति त[२७]ज्जनैस्तु
सुखं करोत्येष न बो[२८]धनीयः ॥ ११ ॥
इत्युच्यते तस्य न त[२९]त्र किञ्चि[३०]

---

२४ तत् सुखं सातासातवेदनीयद्वयकर्यक्षयनाशभवं । *तस्मात्कारणात् । २५ दर्शन । २६ पीडितः । २७ तस्य निद्राणनरस्य तदीयस्वकबन्धुजनैः । २८ जागरणीयः । २९ निद्रावस्थायां । ३० इन्द्रियसुखं ।

च्छ्रोतःसुखं नापि क्रियां[31] निरीक्ष्यते ।
तथापि सुप्तस्य नरस्य सौख्यं
वाच्यं यथा स्याद् भुवि तद्वदेव ॥ १२ ॥
जाग्रत्सु[32] सिद्धेषु सदैव सौख्यं
विनेन्द्रियद्वैत[33]समुत्थभोगम् ।
यद्वा हि योगी निजकात्मबोधा[34]-
मृतं पिबन्नस्मि सुखीति मन्ता ॥ १३ ॥
तथा च कोऽपीह मुनिर्यथोक्तः
सन्तुष्टिपुष्टो विजितेन्द्रियार्थः ।
अन्येन पुंसा परिपृच्छ्यते चेत्
त्वं कीदृशो[35]ऽसीति सुखी स जल्पेत् ॥ १४ ॥
तस्मिन् क्षणे तस्य न कोऽपि वस्तुनः
स्पर्शः सतो[36] नैव च भुक्तियुक्तिः ।
गन्धग्रहो नो न च दृक्श्रुती[37] तदा
न पाणिपादादिभवा क्रियापि च ॥ १५ ॥
तथापि सन्तोषवताहमस्मि

---

३१ क्रिया करपादादिसमुद्भूता । ३२ ज्ञानवत्सु । ३३ क्रियेन्द्रिय-बुद्धीन्द्रिययुग्मोत्पन्नभोगं विनैव । ३४ ज्ञान । ३५ सुखी वा दुःखी वा च कीदृशोऽसीति पृष्टे । ३६ उत्तमस्य । ३७ न च तदा सत उत्तमस्य वस्तुनः किञ्चिद्दर्शनं न च श्रवणमित्यर्थः ।

सुखीति भूयः[३८] प्रतिगद्यते ऽतः ।
तज्ज्ञानसौख्यं हि स एव वेत्ति
न ज्ञानहीनो गदितुं समर्थः ॥ १६ ॥
इत्थं हि सिद्धेषु विनेन्द्रियार्थै-[३९]
स्तथा क्रियाभिः[४०] सुखमस्त्यनन्तम् ।
ते[४१] एव तत्सौख्यभरं विदन्त्यपि
ज्ञानी न शक्तो वदितुं यतोऽसमम् ॥ १७ ॥

इति जैनतत्त्वसारे जीवकर्मविचारे सूरचन्द्रमनःस्थिरीकारे
सिद्धात्मनः कर्मानादानोक्तिलेशः पञ्चमो ऽधिकारः ॥



३८ भृशं । ३९ बुद्धीन्द्रियक्रियेन्द्रियसमुत्पन्नगोचरैर्विना । ४० क्रियाभिः मनोवाक्कायजनिताभिर्विनाइत्यर्थः । ४१ ते एव सिद्धा एव ।

# अथ षष्ठो ऽधिकारः



जीवस्य कर्मग्रहणे स्वभाव-<br>
स्तदा स मौलं सहजं विहाय ।<br>
[४२]कर्मग्रहाख्यं कथमेष सिद्धो<br>
भवेद्विचारः परिपठ्यतां भोः ॥ १ ॥

कर्मात्मनोर्यद्यपि मौल[४३]सङ्ग-<br>
स्तथापि [४४]सामग्र्यतथोपलम्भात् ।<br>
कर्मग्रहं प्रोज्झ्य शिवं [४५]समेतः<br>
सिद्धो भवेदत्र निदर्शनं यत् ॥ २ ॥

सूते यथा चञ्चलतास्वभावो<br>
मौलस्तथाऽन्यस्थिरभावसञ्ज्ञः ।<br>
यदा तु [४६]तादृक्परिकर्मणा कृत-<br>
स्तदा स्थिरो वह्निगतश्च तिष्ठेत् ॥ ३ ॥

यथा पुनर्दाहकतागुणो ऽस्मा-<br>
वस्ति स्वभावो न तु मूलजातः ।<br>
अस्यापि नाशोऽस्ति [४७]तथाप्रयोगात्

---

४२ कर्मग्रहणस्वरूपं । ४३ अनादिसम्बन्धः । ४४ तथा प्रकारसामग्रीप्रापणात् । ४५ गतः । ४६ तादृशभावनाभिर्विहितः । ४७ तद्वीर्योपघातकारिसामग्रीसम्बन्धात् ।

सन्तं[48] सतीं[49] नैव दहेत्कदापि ॥ ४ ॥
बद्धो यथाप्येष च मन्त्रयोगात्
तथौषधीभिर्न दहेद्विशन्तं ।
अश्नन्तमग्निं च चकोरकं तथा
वह्निर्दहेन्नो विगतस्वभावः ॥ ५ ॥
तथाभ्रकं हेम च रत्नकम्बलं
सिद्धं च सूतं न दहेद्धुताशनः ।
तदा तु या दाहकता विभावसौ[50]
मौली व्रजेत्क्वाथ निगद्यतामिति ॥ ६ ॥
यश्चुम्बकग्रावणि लोहग्राही[51]
स्वभाव आस्ते सहजः[52] सको ऽस्ति ।
तस्मिन्मृते[53] वेतरयोगयुक्ते
ऽपेतीत्थ[54]मेतेष्व[55]पि कर्मयोगः ॥ ७ ॥
बीजं[56] तथाङ्कुर[57]मेवं दधाति
मौलात्स्वभावादविकारि यावत् ।
तस्मिंस्तु दग्धे न किलाङ्कुरोद्भव[58]

---

४८ संन्त साधुं सत्यवादिनं । ४९ सतीं शीलव्रतवतीं सीतादिकां । ५० अग्नौ । ५१ ह्रादिपाटात् न पूर्वस्य दीर्घः । ५२ सहोत्पन्नः । ५३ मृते अग्निना भस्मीभूते ऽथवान्यौपधादिना तद्दर्पहारिणा संयुक्ते । ५४ यातीत्यर्थः । ५५ सिद्धेषु । ५६ धान्यादि । ५७ उत्पत्ति । ५८ उत्पत्तिः ।

एवं तु सिद्धेषु च कर्मबन्धः ॥ ८ ॥

वायोस्तथा चञ्चलतास्वभावो
यो वर्तमानः सहजः समस्ति ।
खैलस्य[५९] मध्ये पवने निरुद्धे
कथं प्रयात्येष चलस्वभावः ॥ ९ ॥

आहारमुख्याः सहजाश्चतस्रः
सञ्ज्ञा इमाः प्रोज्झ्य शुकादयो[६०] ऽमी ।
सिद्धाः प्रसिद्धाः परब्रह्मरूपाः
जातास्ततो ऽपैति निजस्वभावः ॥ १० ॥

इत्यादिदृष्टान्तभरैः स्वभावो
मौलो यथा याति तथैव जन्तोः ।
कर्मग्रहो ऽयं सहजः प्रयाति
सिद्धत्वमाप्तस्य किमत्र चित्रं ॥ ११ ॥

इति जैनतत्वसारे जीवकर्मविचारे सुरचन्द्रमनःस्थिरीकारे
सिद्धात्मनः कर्मग्रहणानिराकरणोक्तिलेशः
षष्ठो ऽधिकारः ॥

---

५९ खलस्य दृप्त्यां । ६० शुकादयः शैवशासनप्रसिद्धाः ।

# अथ सप्तमो ऽधिकारः

प्रश्नस्तथैकः परिपृच्छ्यते ऽसकौ
सिद्धान्समाश्रित्य निजोपलब्धये[६१] ।
सर्वज्ञवाक्यात्किल मुक्तिमार्गको[६२]
वहन् सदास्ते करकस्य नालवत् ॥ १ ॥
नो पूर्यते मुक्तिरसौ कदापि
संसार एषो ऽपि च भव्यशून्यः ।
परस्परेष्वपिवचोविलासै-
र्न सङ्गतिं मङ्गति[६३] वाक्यमेतत् ॥ २ ॥
न हि व्यलीकं भगवद्वचो[६४] ऽस्त्यदः
परं न चित्ते ऽल्पधियामभिव्रजेत् ।
दृश्यो ऽस्ति दृष्टान्त इहैव लौकिको
यं[६५] शृण्वतां श्रोतृनृणां मनः स्थिरं ॥ ३ ॥
सिद्धालयः स्याल्लवणोदसोदरः[६६]

---

६१ स्वकीयज्ञानार्थं । ६२ प्रशंसायां प्रसिद्धौवा स्वार्थे वा क प्रत्ययः । ६३ मङ्गि गतौ भौवादिको गत्यर्थः गच्छति । ६४ आप्त । ६५ दृष्टान्तं । ६६ लवणोदः लवणसमुद्रः तस्य सोदर इव भ्राता इव यः सः लवणोदसोदरः सोदरशब्दो ऽत्र प्रस्तावात्तादृशार्थः ।

संसार एषो ऽस्ति नदीह्रदोदरः[६७] ।
नदीप्रवाहाश्च यथा महोदधौ
पतन्ति निर्गत्य नदीह्रदान्तरात्[६८] ॥ ४ ॥
नदीह्रदा नैव भवन्ति रिक्ता
न चाम्बुधिः कर्हिचिदस्ति पूर्णः ।
नदीप्रवाहो ऽपि निरंतरं य-
द्वहत्यविच्छिन्नतया[६९]तिशीघ्रं ॥ ५ ॥
इत्थं हि भव्याः परियन्ति[७०] मुक्तौ
नदीप्रवाहा इव सागरान्तः ।
संसार एष ह्रदवन्न रिक्तः
पयोधिवन्नैव भृतापि मुक्तिः ॥ ६ ॥
दृष्टान्तदार्ष्टान्तिकयोरितीदं
साम्यं समालोचयतां नराणां ।
भवेत्प्रतीतिः परमार्हतानाम्[७१]-
मर्हद्वचस्येव न चापरत्र[७२] ॥ ७ ॥
अन्यो ऽपि दृष्टान्त इहोच्यते ऽय-

---

६७ नदीनां गङ्गादीनां ह्रदाः पद्मह्रदादयस्तेषामुदरं मध्यस्थजलप्रदेशस्तादिव यः सः तत्सदृशः संसारः अत्र लुप्तोत्प्रेक्षावाचि पदं ज्ञेयं यथाग्निर्माणवकः । ६८ मध्यात् । ६९ अत्रुटिततया । ७० गच्छन्ति । ७१ परमजैनानां । ७२ मिथ्यावाक्यवति ।

माकर्णनीयो विदितप्रमाणैः ।
यथा हि कश्चित्प्रतिभा[73]ऽन्वितः स-
न्नाजन्म[74]मृत्यूद्भवमात्मशक्त्या ॥ ८ ॥
हिन्दूकषड्दर्शनपार[75]शीक-
शास्त्राणि सर्वाणि पठंस्त्रिलोक्याः ।
असङ्ख्यमायुर्निवहन्नपीह
हृदस्य पूर्णं न भवेत्कदाचित् ॥ ९ ॥
शास्त्राक्षरैरप्यथ योजनैवं
यथैव शास्त्राणि भव[76]स्तथाऽयं ।
भवन्ति शास्त्राक्षरवद्विमुक्ताः[77]
सुबुद्धिवक्षोवदियं हि सिद्धिः ॥ १० ॥
अश्रान्तत[78]त्पाठवदेव मुक्ति-
मार्गो वहन्नास्ति निरन्तरायः ।
शास्त्रेष्वधीतेषु न शास्त्रनाश-
स्तथैव सिद्धेषु[79] भवस्य[80] नान्तः ॥ ११ ॥
दृष्टान्तदार्ष्टान्तिकभावनेयं

---

७३ अतिशयवती बुद्धिस्तया युक्तः । ७४ जन्म आरभ्य मरणं यावत् । ७५ यावन । ७६ संसारः । ७७ सिद्धाः । ७८ सुबुद्धिपुरुप-विधायमान पाठ इव । ७९. सर्वभव्यजीवेषु सिद्धिं गतेषु । ८० भव-स्यार्थात्संसारस्थभव्यजीवस्य ।

विज्ञैः स्वयं चेतसि चिन्तनीया ।
एवं ह्यनेक ऽभिनिपन्ति भूयो
दृष्टान्तसङ्घा अपरे ऽपि योज्याः ॥ १२ ॥

इति जैनतत्वसारे जीवकर्मविचारे सूरचन्द्रमनःस्थिरीकारे
संसारशून्यतामोक्षाभरणतादृष्टान्तोक्तिलेशः
सप्तमो ऽधिकारः ॥

# अथ अष्टमो ऽधिकारः ॥

स्वामिन्परब्रह्म[८१] किमुच्यते तत्
लीनं जगद्यत्र भवेद्युगान्ते ।
तदेव[८२] हेतुः पुनरेव सृष्टेः
स्यादीदृशं केन गुणो न वाच्यम् ॥ १ ॥
निशम्यतामार्य मनीषिणामपि
सिद्धान्तवेदान्तविचारवेदिनाम् ।
स्वरूपमेतस्य[८३] निवेदितुं यतो
वाचः स्फुरन्तीह न चर्मचक्षुषाम् ॥ २ ॥
ये योगिनो[८४] निर्मलदिव्यदृष्टय-
श्चराचराचारविवेकचिन्तकाः[८५] ।
लब्धार्थसिद्धिप्रथना हि ते ऽप्यहो
विचारयन्तो न[८६] हि पारमिर्यति ॥ ३ ॥
तथापि ये लोकविलोकनक्षमाः[८७]
सर्वार्थयाथार्थ्यसमर्थनार्थनाः[८८] ।

---

८१ अथ ब्रह्मवादी जैनं प्रति ब्रह्मस्वरूपं पृच्छति। ८२ पुनस्तदेव सृष्टेः सर्जनकार्यस्य कारणं स्यादित्युच्यते। ८३ ब्रह्मणः। ८४ योगाभ्यासकर्त्तारः। ८५ जङ्गमस्थावर। ८६ एतस्य ब्रह्मणः। ८७ चतुर्दशरज्ज्वात्मकलोकदर्शनसमर्थाः। ८८ सर्वे ये ऽर्थाः पदार्थाः द्रव्याणीति यावत् तेषां यत् याथार्थ्यं सत्यता तस्य समर्थनं सम्पादनं तस्यार्थनं प्रार्थनं येभ्यस्ते।

सत्केवलज्ञानविशिष्टदृष्टयो
नीरागिणोऽन्योपकृतौ परायणाः ॥ ४ ॥
ते त्वीदृशं ब्रह्म परं न्यवेदयन्
निर्विक्रियं निष्क्रियमप्रतिक्रियम् ।
ज्योतिर्मयं चिन्मयमीश्वराभिध-
मानन्दसान्द्रं जगतां निषेवितम् ॥ ५ ॥
निर्माय निर्मोहमहंकृतिच्युतं
सम्यग्निराशंसम्[८९]अनीहितार्चनम्[९०] ।
महोदयं निर्गुणम्[९१]अप्रमेयकं
पुनर्भवप्रोज्झितमक्षरं यतः ॥ ६ ॥
विभुं[९२] प्रभावत्परमेष्ठ्यनन्तकं
निर्मत्सरं रोधविरोधवर्जितम् ।
ध्यानप्रभावोत्थितभक्तनिर्वृति
निरञ्जनानाकृति[९३] शाश्वतास्थिति ॥ ७ ॥
एवंविधं ब्रह्म तदेव तत्कथं
हेतुर्भवेत्सृष्टिकुलाल[९४]कर्मणि ।
प्रयोजको ब्रह्मण एव नास्ति य-
स्त्वस्मिन्गतत्वात्सकल[९५]स्य वस्तुनः ॥ ८ ॥

---

८९ निःस्पृहं । ९० अवाञ्छितपूजनं । ९१ सत्वादिगुणत्रयरहितं । ९२ व्यापकं ९३ अनाकारं । ९४ सर्जनरूपं यत्कुलालकर्म कुम्भकारक्रिया तत्र । ९५ ये तु परब्रह्म कर्तृ वदन्ति तेषां मते

# अथ अष्टमो ऽधिकारः ॥

स्वामिन्परब्रह्म[८१] किमुच्यते तत्
लीनं जगद्यत्र भवेद्युगान्ते ।
तदेव[८२] हेतुः पुनरेव सृष्टेः
स्यादीदृशं केन गुणो न वाच्यम् ॥ १ ॥
निशम्यतामार्य मनीषिणामपि
सिद्धान्तवेदान्तविचारवेदिनाम् ।
स्वरूपमेतस्य[८३] निवेदितुं यतो
वाचः स्फुरन्तीह न चर्मचक्षुषाम् ॥ २ ॥
ये योगिनो[८४] निर्मलदिव्यदृष्टय–
श्चराचर[८५]ाचारविवेकचिन्तकाः ।
लब्धाष्टसिद्धिप्रथना हि ते ऽप्यहो
विचारयन्तो न[८६] हि पारमियंति ॥ ३ ॥
तथापि ये लोक[८७]विलोकनक्षमाः
सर्वार्थ[८८]याथार्थ्यसमर्थनार्थनाः ।

---

८१ अथ ब्रह्मवादी जैनं प्रति ब्रह्मस्वरूपं पृच्छति। ८२ पुनस्तदेव सृष्टेः सर्जनकार्यस्य कारणं स्यादित्युच्यते । ८३ ब्रह्मणः । ८४ योगाभ्यासकर्त्तारः । ८५ जङ्गमस्थावर । ८६ एतस्य ब्रह्मणः । ८७ चतुर्दशरज्ज्वात्मकलोकदर्शनसमर्थाः । ८८ सर्वे ये ऽर्थाः पदार्थाः द्रव्याणीति यावत् तेषां यत् याथार्थ्यं सत्यता तस्य समर्थनं सम्पादनं तस्यार्थनं प्रार्थनं येभ्यस्ते ।

सत्केवलज्ञानविशिष्टदृष्टयो
नीरागिणोऽन्योपकृतौ परायणाः ॥ ४ ॥
ते त्वीदृशं ब्रह्म परं न्यवेदयन्
निर्विक्रियं निष्क्रियमप्रतिक्रियम् ।
ज्योतिर्मयं चिन्मयमीश्वराभिध-
मानन्दसान्द्रं जगतां निषेवितम् ॥ ५ ॥
निर्माय निर्मोहमहंकृतिच्युतं
सम्यग्निराशंस[८९]मनीहितार्चनम्[९०] ।
महोदयं निर्गुणम[९१]प्रमेयकं
पुनर्भवप्रोज्झितमक्षरं यतः ॥ ६ ॥
विभुं[९२] प्रभावत्परमेष्ठ्यनन्तकं
निर्मत्सरं रोधविरोधवर्जितम् ।
ध्यानप्रभावोत्थितभक्तनिर्वृति
निरञ्जनानाकृति[९३] शाश्वतास्थिति ॥ ७ ॥
एवंविधं ब्रह्म तदेव तत्कथं
हेतुर्भवेत्सृष्टिकुलालकर्मणि[९४] ।
प्रयोजको ब्रह्मण एव नास्ति य-
स्त्वस्मिन्गतत्वात्सकल[९५]स्य वस्तुनः ॥ ८ ॥

---

८९ निःस्पृहं । ९० अवाञ्छितपूजनं । ९१ सत्वादिगुणत्रयरहितं । ९२ व्यापकं ९३ अनाकारं । ९४ सर्जनरूपं यत्कुलालकर्म कुम्भकारक्रिया तत्र । ९५ ये तु परब्रह्म कर्तृ वदन्ति तेषां मते

[९६] कुर्याद्यदीदं जगतां हि सर्जनं
तदेदृशं केन[९७] करोति विष्टपम् ।
जन्मात्ययव्याधिकषायकैतव-
कन्दर्पदौर्गत्यभियाभिराकुलम् ॥ ९ ॥

परस्परद्रोहिविपक्षलक्षितं
दुःश्वापद[९८]व्याल[९९]सरीसृपालिकम्[२००] ।
साखेटिकैर्मैनिकसौनिकैश्चितं
दुश्चोरजारादिविकारपीडितम् ॥ १० ॥

कस्तूरिकाचामरदन्तचर्मणे
सारङ्गधेनुद्विपचित्रकान्तकम्[१] ।
दुर्मारिदुर्भिक्षकविड्वरादिकं
दुर्जातिदुर्योनिककीटपूरितम् ॥ ११ ॥

अमेध्यदौर्गन्ध्यकलेवराङ्कितं
दुष्कर्मनिर्मापणमैथुनाञ्चितम् ।
समाश्रयद्धातुकृताङ्गिपुद्गलं[२]

---

सर्वाणि कालस्वभावनियत्यादीनि अपि ब्रह्मगतान्येव सन्ति तस्य ब्रह्मणः कालादिः कश्चिदन्यः पदार्थो नास्ति यः ब्रह्मप्रति सर्जनसंहारे च प्रेरयति। ९६ यदीदमपि ब्रह्म निःक्रियनिरञ्जनाद्युक्तानेकाविशेषणाविशिष्टं सृष्टिं कुर्यादिति भवतां विधिरस्ति तर्हि भवतां ब्रह्म स्वस्वरूपाद्विपरीतां सृष्टिं कथं करोतीत्युदाहरति सप्तवृत्तैः । ९७ कारणेन । ९८ व्याघ्र । ९९ दुष्टगज । २०० वींछी । १ नाशकम् । २ शरीरं ।

स[३]नास्तिकं [४]सर्वमुनीशनिन्दितम् ॥ १२ ॥
कियत्[५]स्वकीयाह्वयबद्धवैरं
कियत्[६]स्वपूजाप्रवणाङ्घ्रिजातम् ।
नानात्महिन्दूकतुरुष्कलोकं
कियत्परब्रह्मनिरासहासम् ॥ १३ ॥
षड्दर्शनाचारविचारडम्बरं
प्रचण्डपाषण्डघटाविडम्बनम् ।
सत्पुण्यपापोत्थितकर्मभोगदं
स्वर्गापवर्गादिभवान्तरोदयम् ॥ १४ ॥
वितर्कसम्पर्ककुतर्ककर्कशं
नानाप्रकाराकृतिदेवतार्चनम् ।
[७]वर्णा[८]श्रमाचीर्णपृथक्पृथग्[९]वृषं

---

३ नास्तिका हि कर्त्तारं न मन्यन्ते तर्हि सृष्टिकर्त्तुस्तद् ज्ञानं नासीद्धर्मी मर्मैव विलोपका भविष्यन्ति न चात्र पितापुत्रविचारो वाच्यः पिता तु इन्द्रियपरवशो ज्ञानी अनायतिज्ञो यथातथा पुत्रकर्मणि प्रवर्ततां परब्रह्म तु निर्विकारं सज्ञानं चेति स्वसृष्टिनिकृन्तान् कथं नाम करोतीति अथ च तस्य रागद्वेषौ न स्तस्तर्हि सृष्टिसंहारौ कथं करोतीति विचार्यमाणं विशीर्यते इति सम्यग्ध्येयम् । ४ यदि ब्रह्मणा सृष्टिः कृता तर्हि मुनीशा योगिनो ऽपि ब्रह्मणैव कृतास्तर्हि ते परब्रह्मचिन्तकाः सन्तः सकलं संसारस्वरूपं परब्रह्मकृतं असारं ज्ञात्वा कथं निन्दन्तीति विचार्य्यम् । ५ ब्रह्म । ६ ब्रह्म । ७ चत्वारः । ८ चत्वारः । ९ धर्म ।

सद्द्रव्यनिर्द्रव्यनरादिभेदभृत् ॥ १५ ॥

सप्तभिः कुलकम् ॥

अनेन किं पल्लवितेन येन
यद् दृश्यते तद्विपरीतमेव ।
कार्ये पुनः कारणजा गुणाः स्यु-
र्विद्वांस एवं निगदन्ति तज्ज्ञाः ॥ १६ ॥

यदत्र[10] दृश्यं किल वस्त्वनित्यं
तद्[11]ब्रह्मणो जातमिदं हि सृष्टौ[12] ।
तद्[13]योगिनः केन विहाय शीघ्रं
जुगुप्स्यमेतद्वृणते विरागम् ॥ १७ ॥

यद् द्वेषरागादिविरूपमुज्झ्यं
जगत्स्वरूपं वरयोगवद्भिः ।
तदेव सर्वं खलु ब्रह्मणैव
स्वस्मिन्कथं धार्यमहो युगान्ते ॥ १८ ॥

तदा विवेको ऽस्ति न ब्रह्मरूपे
ऽसौ वा शुकाद्येषु न योगवत्सु ।
कार्यं च धार्यं च यदा[15]दिपुंसो
निन्द्यं च हेयं च तदन्यपुंसाम्[16] ॥ १९ ॥

---

१० संसारे । ११ सर्वं वस्तु । १२ सर्गकाले । १३ । वस्तु ।
१४ शुकादिभिः । १५ आदिपुरुषस्य पुराणपुरुषस्यार्थात्परब्रह्मनाम्नि ।
१६ शुकादीनां योगिनाम् ।

तद्ब्रह्मजा सृष्टिरथापि कल्प-
स्तज्जो[17] वेदाद्भिस्त्विति ब्रह्म मूढं ।
विज्ञाप्यते किं न च तैस्तथैषां[18]
वान्ताहृतेर्ब्रह्मणि[19] किं न दोषः ॥ २० ॥

लोके तथैकादिकब्राह्मणादि-
घाते ऽत्र हत्या महती निगद्या ।
तन्निघ्नतो ब्रह्मण एव सृष्टिं
सा[20] कीदृशी स्याददयस्य दयालोः ॥ २१ ॥

तज्जातसृष्टिं न हि तस्य हिंसा
निर्हिंसतश्चेद्भवतीति चोद्यते ।
सम्पाद्य सम्पाद्य सुतान्स्वकीया-
न्पितुर्घ्नतस्तर्हि न को ऽपि दोषः ॥ २२ ॥

लीलेयमस्यास्ति यदीति चेद्धी-
र्निर्हिंसतस्य न चास्ति पापम् ।
एवं हि राज्ञो मृगयां गतस्य
जीवान्घ्नतः पातकमेव न स्यात् ॥ २३ ॥

---

१७ ब्रह्मवादिभिः । १८ परब्रह्मादिकर्तृवादिनां । १९ यत्तु सृष्टिकाले स्वस्मात्सर्वं निष्कापितं तदा तु तत्सर्वं वान्तमिव पुनश्च संहृतिकाले सर्वस्यापि जगतः आत्मनि संलीनीकरणाद्भक्षणमिवेति तेन सृष्टिकृता वान्ताहृतिदोषो ऽपि न वितारितः । २० हत्या ।

अथ स्वभावादथ कालतो वा
सृष्टिं मतो नास्ति विभोरघाप्तिः[२१] ।
स्वभावकालौ यदि चेद् बलिष्ठौ
ब्रह्माप्यशस्ते नुदतः क्षये ऽस्मिन् ॥ २४ ॥

एतौ तदेवात्र च हेतुभूतौ
किं ब्रह्मणा युक्त्यसहेन कार्यम् ।
तद्ब्रह्मणः सृष्टिविधिं तथैव
संहारकत्वं च वदन्ति ये तैः ॥ २५ ॥

न ब्रह्ममहिमा प्रकटीकृतः किं
निर्दूषणे दूषणमादधे यत्[२२] ।
वन्ध्या ममाम्बेति समं निगद्यते
यन्निष्क्रियं ब्रह्म निगद्य कर्त्रिति ॥ २६ ॥

ये के ऽपि विज्ञानभृतो[२३] भवन्ति
सर्वे च ते ब्रह्म विचिन्तयन्ति ।
ब्रह्मांशकास्ते[२४] यदि को ऽस्ति भेदः

---

२१ पापाप्तिः । २२ यदेव ब्रह्म निरञ्जननिःक्रियनिर्गुणनिस्पृहादिगुणविशिष्टमुक्त्वा तदेव ब्रह्म कर्तृसंहर्तृरागिद्वेषिसर्वसंसारप्रवर्तकमुच्यते इति निर्दूषणे ब्रह्मणि दूषणं स्थापितमिति तेषां वचो अस्मन्मनो न रञ्जयति किमुच्यते अथ च तैः परस्परविरोधि वचो अङ्गीकृतं तदेवाह । २३ विशिष्टज्ञानवन्तो योगीश्वराः । २४ ते योगीश्वराः ।

[२५]कस्मै विचारः क्रियते तदेभिः ॥ २७ ॥

अंशास्तदीया यदि जन्तवोऽमी
स्वयं स्वपार्श्वं हि तदेव नेतृ[२६] ।
विनैव कष्टं यदि तस्य[२७] लब्ध्यै
नीरागता निःस्पृहता निकामम् ॥ २८ ॥

निर्द्वेषता निष्क्रियता च तद्व-
ज्जितेन्द्रियत्वं च समानभावः ।
इत्यादि[२८] कार्यं यदि तस्य[२९] प्रीति-
रेष्वेव सिद्धं[३०] तदिहाक्रियत्वम् ॥ २९ ॥

चेद्वक्ष्यसि ब्रह्मगतः स्वभावो
ऽयमीदृशः[३१] सक्रियनिष्क्रियादिः ।
कर्तुस्त्व[३२]नेकैश्च तदा स्वभावै-
रनित्यतापीह भवेत्कदाचित् ॥ ३० ॥

---

२५ किमर्थं यदि योगिनः स्वयं ब्रह्मांशकास्तर्हि ब्रह्मांशानां अतःपरं लभ्यमवशिष्यते यद् ब्रह्म चिन्तयन्ति । २६ नेष्यति । २७ ब्रह्मणो लब्ध्यै प्राप्त्यै । २८ विधेयं । २९ ब्रह्मणः । ३० तत्तस्मात्कारणात् इह ब्रह्मणि । ३१ अप्रच्युतानुत्पन्नास्थिरैकस्वभावं नित्यमित्यनेक स्वभावस्य नित्यस्य ब्रह्मणः सक्रियनिःक्रियताद्यनेकस्वभावेनानित्यत्वप्रसङ्गः । ३२ यदि ब्रह्मणः सृष्टौ संहारे च सक्रियतान्यत्रावस्थायां निःक्रियता स्यादिति भिन्नस्वभावता ततोऽनेकस्वभावतापत्ति तदा नित्यस्वभावपरित्यागादनित्यस्वभावतापि स्यात् प्रजासु सुखदुःखदर्शनात् ब्रह्मणि रागद्वेषयोरपि द्वौ भिन्नस्वभावौ स्तस्तर्हि यथा चर्मदृशा न दृश्यते

अथ स्वभावादथ कालतो वा
सृष्टिं घ्नतो नास्ति विभोरघाप्तिः[21] ।
स्वभावकालौ यदि चेद् बलिष्ठौ
ब्रह्माप्ययशस्ते नुदतः क्षये ऽस्मिन् ॥ २४ ॥
एतौ तदेवात्र च हेतुभूतौ
किं ब्रह्मणा युक्त्यसहेन कार्यम् ।
तद्ब्रह्मणः सृष्टिविधिं तथैव
संहारकत्वं च वदन्ति ये तैः ॥ २५ ॥
न ब्रह्ममहिमा प्रकटीकृतः किं
निर्दूषणे दूषणमादधे यत्[22] ।
वन्ध्या ममाम्बेति समं निगद्यते
यन्निष्क्रियं ब्रह्म निगद्य कर्त्रीति ॥ २६ ॥
ये के ऽपि विज्ञानभृतो[23] भवन्ति
सर्वे च ते ब्रह्म विचिन्तयन्ति ।
ब्रह्मांशकास्ते[24] यदि को ऽस्ति भेदः

---

२१ पापाप्तिः । २२ यदेव ब्रह्म निरञ्जननिःक्रियनिर्गुणनिस्पृहादिगुणविशिष्टमुक्त्वा तदेव ब्रह्म कर्तृसंहर्तृरागिद्वेषिसर्वसंसारप्रवर्तकमुच्यते इति निर्दूषणे ब्रह्मणि दूषणं स्थापितमिति तेषां वचो अस्मन्मनो न रञ्जयति किमुच्यते अथ च तैः परस्परविरोधि वचो अङ्गीकृतं तदेवाह । २३ विशिष्टज्ञानवन्तो योगीश्वराः । २४ ते योगीश्वराः ।

[२५] कस्मै विचारः क्रियते तदेभिः ॥ २७ ॥

अंशास्तदीया यदि जन्तवोऽमी
स्वयं स्वपार्श्वं हि तदेव नेतृ[२६] ।
विनैव कष्टं यदि तस्य[२७] लब्ध्यै
नीरागता निःस्पृहता निकामम् ॥ २८ ॥

निर्द्वेषता निष्क्रियता च तद्व-
ज्जितेन्द्रियत्वं च समानभावः ।
इत्यादि[२८] कार्यं यदि तस्य[२९] प्रीति-
रेष्वेव सिद्धं तदिहा[३०]क्रियत्वम् ॥ २९ ॥

चेद्वक्ष्यसि ब्रह्मगतः स्वभावो
ऽयमीदृशः सक्रियनिष्क्रियादिः[३१] ।
कर्तुस्तदाऽनेकैश्च[३२] तदा स्वभावै-
रनित्यतापीह भवेत्कदाचित् ॥ ३० ॥

---

२५ किमर्थं यदि योगिनः स्वयं ब्रह्मांशकास्तर्हि ब्रह्मांशानां अतःपरं लभ्यमवशिष्यते यद् ब्रह्म चिन्तयन्ति । २६ नेष्यति । २७ ब्रह्मणो लब्ध्यै प्राप्त्यै । २८ विधेयं । २९ ब्रह्मणः । ३० तत्तस्मात्कारणात् इह ब्रह्मणि । ३१ अप्रच्युतानुत्पन्नस्थिरैकस्वभावं नित्यमित्यनेकस्वभावस्य नित्यस्य ब्रह्मणः सक्रियनिःक्रियताद्यनेकस्वभावेनानित्यत्वप्रसङ्गः । ३२ यदि ब्रह्मणः सृष्टौ संहारे च सक्रियतान्यत्रावस्थायां निःक्रियता स्यादिति भिन्नस्वभावता ततोऽनेकस्वभावतापत्ति तदा नित्यस्वभावपरित्यागादनित्यस्वभावतापि स्यात् प्रजासु सुखदुःखदर्शनात् ब्रह्मणि रागद्वेषयोरपि द्वौ भिन्नस्वभावौ स्तस्तर्हि यथा चर्मदृशा न दृश्यते

द्वेषो ऽपि रागो ऽपि दृशापि वीक्षा
नित्यं तदेवास्ति यदेकरूपम्[३३] ।
आकाशवद्व्याप्तिरियं हि यत्र
वाक्येन पञ्चावयवेन कृप्ता[३४] ॥ ३१ ॥

कर्त्तुः स्फुटा सक्रियता मनःस्था
सृष्टौ युगान्ते च तदन्यभावे[३५]
स्यान्निष्क्रियत्वं च तथैव राग-
द्वेषौ जनानां सुखदुःखदृष्ट्या ॥ ३२ ॥

यादृक्क्रिया[३६] तादृशसौख्यदुःखे
चेदेवमूहो भवतामपि[३७] स्यात् ।
कर्त्तुर्बलं किं किल तर्हि सिद्धे
स्वपापपुण्ये सुखदुःखहेतू ॥ ३३ ॥

हे ब्रह्मवादिन् यदि जन्तवो ऽमी
ब्रह्मांशकास्तर्हि समे समाः स्युः ।

---

ब्रह्मेति स्वभावः तस्यापि परावृत्त्या कदाचिन्नेत्रेणापि ब्रह्मणो दर्शनं भवेदनेकस्वभावत्वात् यदनेकस्वभावं तन्नित्यं न स्यात् । ३३ नित्यं तदेव यदेकस्वरूपं एकस्वभावमिति । न्यायस्तु एवं । ब्रह्म नित्यं । एकस्वभावत्वात् । यदेकस्वभावं तन्नित्यं यथाकाशं । तथा चेदं । तस्मा-त्तथेति पञ्चावयववाक्येन या नित्यवस्तुनो व्याप्तिरस्ति सा ब्रह्मणि सक्रियानिःक्रियरक्तद्विष्टादिभिन्नाभिन्नानेकस्वभावत्वेन न प्रसक्ता स्यादित्यादि स्वयमूह्यम् । ३४ कृता । ३५ सृष्टिसंहाराभावे । ३६ ब्रह्मवादीति चेदुत्तरयति । ३७ ब्रह्मवादिनामपि ।

[३८]तदंशसाम्याद् वहुभेदभिन्ना[३९]-<br>
श्चेत्तर्हि कश्चिन्ननु [४०]तत्करो ऽन्यः ॥ ३४ ॥<br>
चेद्ब्रह्मभिन्ना भुवि जन्तवो ऽमी<br>
सुखस्य दुःखस्य च कर्तृ ब्रह्म ।<br>
हेतोर्यतो दुःखसुखे विधत्ते<br>
ब्रह्मा स एवास्तु [४१]तयोर्विधाता ॥ ३५ ॥<br>
निरञ्जनं नित्यममूर्त्तमक्रियं<br>
सङ्गीर्य्य ब्रह्माथ पुनश्च कारकम् ।<br>
संहारकं रागरु*डादिपात्रकं<br>
परस्परध्वंसि वचोस्त्यदस्ततः ॥ ३६ ॥<br>
अतो विभिन्नं जगदेतदेत-<br>
द्ब्रह्मापि भिन्नं मुनिभिर्व्यचारि ।<br>
अतस्तु संसारगता मुनीन्द्राः<br>
कुर्वन्ति मुक्त्यै परब्रह्मचिन्ताम्[४२] ॥ ३७ ॥<br>
ये केऽपि[४३] मायामिह विष्णुमाश्रिता

---

३८ ब्रह्मांशानाम् । ३९ जीवाः । ४० सुखदुःखादिभेदकरोऽन्यः पदार्थः । ४१ पुण्यपापयोः । *द्वेष । ४२ ध्यानम् । ४३ ये केचन वैष्णवाः सन्ति ते च विष्णुनैव कृतं सर्गं संहारं च वदन्ति यथा च पद्मपुराणे तत्वानुसारिमहादेवकृतभगवत्सहस्रनामपाठे प्रतिपादितम् । यतः सर्वाणि भूतानि भवन्त्यादियुगागमे । यस्मिंश्च प्रलयं यान्ति पुनरेव युगक्षये ॥ इत्याद्यनेकशः पाठैः पठन्तीति तानाश्रित्याह ये के ऽपीत्यादि ।

जगद्विधौ हेतुमुदीरयन्त्यथ ।
प्रष्टव्यमेषामिति किं हि मायां
विष्णुः श्रितो विष्णुमथापि माया ॥ ३८ ॥
माया जडा संश्रयितुं स्वयं नो
शक्ता तु विष्णुः परब्रह्म[४४]तुल्यः ।
जानन्स्वयं नाश्रयते हि मायां
यत्पारतन्त्र्यादजडो जडं श्रयेत् ॥ ३९ ॥
अथैष विष्णुर्युगपन्नुदेत्तां
पृथक्पृथग्वा प्रतिजीवमीर्ते ।
आद्ये यदीमां तु नुदेत्रिलोकी
तदैकरू[४६]पास्तु न भिन्नरूपा ॥ ४० ॥
तदैक[४७]रूप्याद्यदि तां[४८] पृथक्पृथग्
जीवान्प्रतीर्ते नु भवेत्तदानीम् ।
आ[४९]नन्त्यमस्या इयमप्यनेक–
रूपा च जीवा अपि भिन्नरूपाः ॥ ४१ ॥
नामैवमस्त्वत्र तथापि माया

---

*श्रिता । ४४ परब्रह्माधिकारोक्तविशेषणविशिष्टत्वात् ब्रह्मतुल्यो वा विष्णुर्ब्रह्मापरपर्यायो वा विष्णुरिति । ४५ मायां । ४६ यदी सुखमयी तदा सुखमय्येव दुःखमयी दुःखमय्येव न च भिन्नरूपा । ४७ तस्या मायाया एकरूप्यं एकस्वभावता तस्मात् । ४८ मायां । ४९ जीवानामनेकत्वात् ।

जडा सती किं चरितुं[५०] क्षमा स्यात् ।
कर्त्तुश्च शक्तेरथ सा समर्था
तदैव कर्त्ता सुखदुःखयोऽस्तु ॥ ४२ ॥
किं कर्त्तुरेतैरपराद्धमस्ति
चेदीदृशीं तां[५१] प्रति जीवमीर्त्ते ।
निरागसां[५२] प्राणभृतां य ईदृ-
ग्दुःखादि कर्त्ता स कथं हि कर्त्ता ॥ ४३ ॥
ध्यायन्ति ये नेशमिमेऽस्य[५३] सागसा[५४]-
स्तेषामसौ[५५] दुःखकरः प्रथेत्[५६]यहो ।
ये त्वीशमेनं प्रति सेवमाना-
स्तेषामयं साततिं विधत्ते ॥ ४४ ॥
द्वेषी च रागी च भवतां स कर्त्ता
य ईदृशीमाचरति प्रतिक्रियाम् ।
नामैवमस्त्वस्तु परं य एनं
निन्देन्न[५७] वन्देत गतिस्तु कास्य ॥ ४५ ॥
लोके त्रिधा स्याद्व्यतिरेकवस्तुनो
यत्सेवकासेवकमध्यमात्मिकाः ।

---

५० कर्त्तुम् । ५१ मायाम् । ५२ निरपराधानाम् । ५३ कर्त्तुः । ५४ सापराधाः । ५५ सेवकानाम् । ५६ प्रसिद्धिः । ५७ मध्यस्थ-तयाऽस्योभयत्रसम्बन्धो डमरुकमणिवत् ।

ओ[५८]द्योर्द्वयोश्चेद्गतिरस्तितर्हि
मध्य[५९]स्थजन्तोरपि सास्तु काचित् ॥ ४६ ॥
अस्यापि काचिन्नियता गतिः स्या-
दस्यागतेस्तर्हि च कोऽस्ति कर्त्ता ।
तर्हीति वाच्यं सुखदुःखमुख्यं
यथा कृतं कर्म तथैव लभ्यम् ॥ ४७ ॥
इत्थं च ये केच[६०]न सङ्गि[६१]रन्ते
कर्त्ता स्व[६२]तो जीवगणान्प्रसृज्य[६३] ।
संसारिभावं प्रणिदा[६४]य तेषां
महाक्षये संहरते पुनस्तान् ॥ ४८ ॥
वाच्या[६५] अमी किं जगदीश्वरोऽयं
जीवान्स[६६]तः किं प्रकटीकरोति ।
किं वा नवा[६७]नेवकरोति कर्त्ता
चेदादिपक्षः शृणु तर्हि वार्ताम् ॥ ४९ ॥
इष्टे[६८] पदे चेत्परिरक्ष्य जीवान्
यः कार्यकाले प्रकटीकरोति ।

---

५८ सेवकासेवकयोर्द्वयोः । ५९ उदासरूपस्य गतिः । ६० यवनाचार्योदयः । ६१ प्रतिजानते प्रतिज्ञां कुर्वन्तीति यावत् । ६२ स्वकीयादात्मनः सकाशात् । ६३ कृत्वा । ६४ दत्त्वा । ६५ ये इत्थं वदन्ति ते वाच्याः पृष्टव्या इत्यर्थः । ६६ विद्यमानान् । ६७ जीवान् । ६८ स्ववाञ्छिते स्थाने ।

सो ऽस्मादृशः [६९]कर्मणि वस्तुरक्षी
[७०]प्रस्तावनोप्राप्तिभयाद्विभीतः ॥ ५० ॥
अशक्तिरप्यस्य निवेदिता य-
न्नो [७१]भिन्नभिन्नार्थकमेलवीर्यः ।
कर्त्तुस्त्वचिन्त्या किल शक्तिरस्ति
तत्किं स लोभीति निगद्यते हो ॥ ५१ ॥
कृत्वा नवानेव यदैव जन्तून्
संसारिभावं [७२]प्रति लाभयेच्चेत् ।
मौलान्कथं मोचयितुं क्षमो न
येन [७३]स्वकृप्तानितिकिं विडम्बयेत् ॥ ५२ ॥
कृतानपीत्थं यदि संहरेत् पुनः
को ऽयं विवेको जगदीशितुः सतः ।
बालो ऽपि यो वस्तु निजं प्रक्लृप्तं
धर्तुं क्षमस्तावदयं [७४]दधाति ॥ ५३ ॥
लीलेति चेत्तर्हि जनो ऽपि [७५]लीलां
कुर्वन्न निन्द्यो भवति प्रवीणैः ।
तपोयमध्यानमुखैः [७६]स लभ्य-

---

६९ क्रियावसरे । ७० अवसरे या ऽप्राप्तिस्तद्भयात् । ७१ पृथक्पृथग्जीवपदार्थमेलनबलः । ७२ प्रापयेत् । ७३ स्वकृतान् । ७४ रक्षति । ७५ स्वचित्ताभीष्टागम्यगमनादिक्रीडां विदधत् । ७६ स खुदाई नामा जगदीशः ।

श्चेत्तानि रुच्यै यदि सन्ति तस्मै ॥ ५४ ॥
एतानि[77] यस्मै रुचये भवन्ति
स नेदृशीं जातु करोति लीलाम्[78] ।
लोकेऽपि जीवादिकघातनोत्था
लीला निषिद्धास्ति समैव तेन ॥ ५५ ॥
अन्यान्निषेधन्पुनरात्मना सृजं-
स्तदा स को ऽतीव विनिन्दितः स्यात् ।
एवं त्वनालोचनकर्मकारं
वयं न कर्त्तारमिमं वदामः ॥ ५६ ॥
यत्त्वद्वचो[79]न्यासभरैः स कर्त्ता
पूतः स्वयं स्वीयजनान्पुनानः ।
ज्योतिर्मयाद्योत्थगुणै र्विशिष्टः
सो ऽपि स्वकांशान्स्वर्[80]रसाद्विमोहे ॥ ५७ ॥
संसारभावे विरचय्य सद्यो
जीवत्वमेवं बहुदुःखपात्रं ।
नुदत्ययं चेन्नहि तर्हि कर्त्तु-
रंशा इमे प्राणभृतो ऽपरे यत् ॥ ५८ ॥

---

७७ तपःप्रभृतीनि । ७८ जनानां दुःखदानरागद्वेपादिविधान-संहारादिकाम् । ७९ प्रागेव ब्रह्मलक्षणसदृशलक्षणः त्वदुक्तकर्त्ता । ८० स्वकीयात् कस्माच्चिल्लीलादिरसात् ।

कर्त्ता कथं सङ्कटपेटकोदरे
दौर्गत्यदौस्थ्यादिमये भवे ऽस्मिन् ।
जानन्निजांशान्सहसैव नुद्यात्
स्वकस्वरूपाद्विनिर्पात्य[81] रम्यात् ॥ ५९ ॥

एषा तु लीलास्ति यदीश्वरस्य
संसार एवैष ततस्तदिष्टः[82] ।
तदा तु संसारिजनैस्तदाप्त्यै[83]
कष्टादि केनाथ विधेयमुग्रम् ॥ ६० ॥

पूर्वापरानाश्रितवाक्यमेतत्
प्रजल्पतां क्वापि न वाक्प्रतीतिः ।
ये सर्वसद्रूपगुणानदोषान्
कर्त्तुर्वरांशानिति पातयन्ति ॥ ६१ ॥

किं[84] तर्हि वाच्यं शृणु किञ्चिदस्ति
ज्योतिर्मयं चिन्मयमेकरूपम् ।
द्रष्टृ[85] प्रजानां[86] सुखदुःखहेतुं[87]

---

८१ पातयित्वा । ८२ परमेश्वरस्येष्टः । ८३ परमेश्वरप्राप्त्यै । ८४ सिद्धान्ती स्वेष्टं परब्रह्मपरमेष्ठिलक्षणमपरनामसिद्धाख्यं निरूपयति । ८५ दर्शकम् । ८६ लोकानां सम्बन्धिनम् । ८७ पुण्यपापलक्षणं प्रति पुण्यपापयोस्तस्य दर्शकत्वे तयोस्तत्तत्फलवत्त्वं स्यात् यथा साक्षिणि सति पुण्यपापयोः फलाफलोपलम्भः सुलभो भवति लोका अपि वदन्ति सर्वं कृतं शुभाशुभं भगवान् वेत्तीति तात्पर्यार्थः ।

योगीश्वरध्येयतमस्वभावम् ॥ ६२ ॥
दौर्गत्यदुःखे सुगतिं सुखं च
प्राप्नोति तादृक्कृतकर्मयोगात् ।
जीवो यदात्वेष समानभावं
श्रयेत्तदा गच्छति ब्रह्मभूयम्[८८] ॥ ६३ ॥
तुष्टिर्जनानां परमेश्वरस्य
चेत्सृष्टिसंहारकथाप्रवृत्त्या ।
स्फूर्त्तिप्रभावप्रतिपादनार्थं
तदेति वाच्या स्तुतिरीश्वरस्य ॥ ६४ ॥
आस्तामयं श्रीपरमेष्ठिनामा
तद्ध्यानवानेष जनो ऽभिनिर्ष्यात्[८९] ।
कर्त्ता सुखस्यात्मनि संविधानात्
संहारकश्चात्मतमोपहारात् ॥ ६५ ॥
यथैवं लोके किल को ऽपिसूरः
स्वाम्यात्तशस्त्रैरपि सर्वशत्रून् ।
सञ्जित्य तत्संहृतिकृन्निजाङ्गे
सुखस्य कृत्यापि भवेत्स कर्त्ता ॥ ६६ ॥
यथा ऽत्र शस्त्रादिकवस्तुनेतुः[९०]
स्थाने स्थितस्यापि न हि प्रयासः ।

८८ ब्रह्मत्वं । ८९ स्यात् । ९० स्वामिनः ।

तथेश्वरस्यापि भवेन्न काचित्
क्रिया यतो निष्क्रियतापि सिद्धा ॥ ६७ ॥
शूरो ऽपि चैवं सति शस्त्र[९१]भर्तु-
र्महोपकारं किल मन्येत ऽसौ ।
अधीशभक्तो ऽपि तदीयनाम-
ध्यानोत्थसौख्य[९२]स्तमेव वक्ति ॥ ६८ ॥
एवं ह्यनेके खलु सन्ति सन्तो
दृष्टान्तसङ्घाः सुधिया समुह्याः ।
तथा सतीशो महिमापि विश्रुतो
भक्तुश्च [९३]सर्गप्रतिसर्गकर्तृता ॥ ६९ ॥

इति जैनतत्वसारे जीवकर्मविचारे सूरचन्द्रमनःस्थिरीकारे
परब्रह्मविचारोक्तिलेशो
ऽष्टमो ऽधिकारः ॥



९१ शस्त्रनायकस्य । ९२ तत्सौख्यकरं तमधीशमेव वक्ति तस्य सेवकत्वात् । ९३ सृष्टिसंहार ।

# अथ नवमो ऽधिकारः

किं ब्रह्म[९४] सिद्धापरनामकीर्त्तितं
ध्येयं मुनीनामपि शुद्धचेतसाम् ।
भवार्णवे यानवदेव योगिनो
जानन्ति यन्मुक्तिगृहं यियासवः ॥ १ ॥
स्वामिन् यदीयं न हि सृष्टिरस्थिता
सकाशतो ब्रह्मण इत्यवाचि चेत् ।
इयं कुतः स्यादपयाति वा कुतो
निगद्यतामद्य रहस्यमेतकद् ॥ २ ॥
त्रिकालविज्ञा इति योगिनो ये
निरागिणस्ते ऽभिदधुर्विशिष्टाः ।
कालात्स्वभावान्नियतेश्चवीर्यतः
सृष्टिक्षयौ स्तः समवायपञ्चकात्[९६] ॥ ३ ॥

---

९४ अथ जिज्ञासुः पृच्छति ब्रह्मभूयमित्यत्र किं नाम ब्रह्मेत्युक्ते तज्जिज्ञासोराशयेन वदति सिद्धान्ती । ९५ यत् सिद्धापरनाम ब्रह्म भवार्णवे संसारसागरे योगिनः मुक्तिरूपं गृहं प्रति प्राप्तुकामाः प्रवहणवत् आमनन्ति. गृहप्रवेशेतु कर्त्तव्ये यथा प्रवहणं परित्यज्यते तथा मुक्ति गृहगमनावसरे सिद्धध्यानमपि संत्यज्यात्मध्यानं च समभावलक्षणमा-श्रित्य मुक्तिगृहं प्रविशन्तीति भावः । ९६ कालः स्वभावनियती, पूर्व-कृतं पुरुषकारणं पञ्च; समवाये सम्यक्त्व,—मेकत्वे भवति मिथ्यात्त्वम्. इति जैनतत्त्वम् ।

मुनीश्वरा ब्रह्मणि ब्रह्म लीयते
ज्योतिस्तथा ज्योतिषि संविशेदिति ।
कथं प्रवादो घटते महात्मना-
मयं विना ब्रह्म पुराण[९७]वेदिनाम् ॥ ४ ॥

निशम्यतां [९८]ज्ञानमिदं वदन्ति
ब्रह्मेति वा ज्योतिरथेति विज्ञाः ।
तदेकसिद्धस्य हि ब्रह्म यावत्
क्षेत्रं श्रयेत्सर्वदिशास्वनन्तम् ॥ ५ ॥

तावद् द्वितीयस्य तृतीयकस्य
सिद्धस्य ब्रह्मा[९९]श्रयते तदेव ।
एवं ह्यनन्तां[३००]मितसिद्धनाम्नां
[१]ब्रह्माश्रयेत् क्षेत्रमहो तदाश्रितम्[२] ॥ ६ ॥

तेनेति गीर्ब्रह्मणि ब्रह्म णीयते
ज्योतिस्तथा ज्योतिषि सम्मिलत्यथ ।
अयं प्रवादो मुनिभिः पुरातनैः

---

९७ पुरातनतत्वविदाम् । ९८ ब्रह्मशब्देन ज्ञानमुक्तमनेकार्थं, तदेव ज्ञानं प्रकाशकत्वात् ज्योतिरिव ज्योतिरिति ज्योतिरपि लोका व्यवहरन्ति तत एकस्यापि परमज्ञानस्य ब्रह्म ज्योतिश्चेति नामद्वयं लोकाः श्रितास्ततो लोकाशयेनोच्यते ब्रह्मेति ज्ञानं ज्योतिर्वेति । ९९ ज्ञानम् । ३०० अनन्ता अत एवामिता ये सिद्धा इति-नापानः । १ ज्ञानं ज्योतिर्वा । २ सिद्धज्ञानाश्रितम् ।

# अथ नवमो ऽधिकारः

किं ब्रह्म[९४] सिद्धापरनामकीर्त्तितं
ध्येयं मुनीनामपि शुद्धचेतसाम् ।
भवार्णवे यानवदेव योगिनो
जानन्ति यन्मुक्तिगृहं यियासवः ॥ १ ॥
स्वामिन् यदीयं न हि सृष्टिरुत्थिता
सकाशतो ब्रह्मण इत्यवाचि चेत् ।
इयं कुतः स्यादपयाति वा कुतो
निगद्यतामद्य रहस्यमेतकद् ॥ २ ॥
त्रिकालविज्ञा इति योगिनो ये
निरागिणस्ते ऽभिदधुर्विशिष्टाः ।
कालात्स्वभावान्नियतेश्च वीर्यतः
सृष्टिक्षयौ स्तः समवायपञ्चकात्[९६] ॥ ३ ॥

---

९४ अथ जिज्ञासुः पृच्छति ब्रह्मभूयमित्यत्र किं नाम ब्रह्मेत्युक्ते तज्जिज्ञासोराशयेन वदति सिद्धान्ती । ९५ यत् सिद्धापरनाम ब्रह्म भवार्णवे संसारसागरे योगिनः मुक्तिरूपं गृहं प्रति प्राप्तुकामाः प्रवहणवत् आमनन्ति. गृहप्रवेशेतु कर्त्तव्ये यथा प्रवहणं परित्यज्यते तथा मुक्ति गृहगमनावसरे सिद्धध्यानमपि संत्यज्यात्मध्यानं च समभावलक्षणमाश्रित्य मुक्तिगृहं प्रविशन्तीति भावः । ९६ कालः स्वभावनियती, पूर्वकृतं पुरुषकारणं पञ्च; समवाये सम्यक्त्व,—मेकत्वे भवति मिथ्यात्वम्. इति जैनतत्त्वम् ।

मुनीश्वरा ब्रह्मणि ब्रह्म लीयते
ज्योतिस्तथा ज्योतिषि संविशेदिति ।
कथं प्रवादो घटते महात्मना-
मयं विना ब्रह्म पुराणवेदिनाम्[९७] ॥ ४ ॥
निशम्यतां ज्ञानमिदं[९८] वदन्ति
ब्रह्मेति वा ज्योतिरथेति विज्ञाः ।
तदेकसिद्धस्य हि ब्रह्म यावत्
क्षेत्रं श्रयेत्सर्वदिशास्वनन्तम् ॥ ५ ॥
तावद् द्वितीयस्य तृतीयकस्य
सिद्धस्य ब्रह्माश्रयते[९९] तदेव ।
एवं ह्यनन्तामितसिद्धनाम्नां[३००]
ब्रह्माश्रयेत्[१] क्षेत्रमहो तदाश्रितम्[२] ॥ ६ ॥
तेनेति गीर्ब्रह्मणि ब्रह्म णीयते
ज्योतिस्तथा ज्योतिषि सम्मिलत्यथ ।
अयं प्रवादो मुनिभिः पुरातनैः

---

९७ पुरातनतत्वविदाम् । ९८ ब्रह्मशब्देन ज्ञानमुक्तमनेकार्थे, तदेव ज्ञानं प्रकाशकत्वात् ज्योतिरिव ज्योतिरिति ज्योतिरपि लोका व्यवहरन्ति तत एकस्यापि परमज्ञानस्य ब्रह्म ज्योतिश्चेति नामद्वयं लोकाः श्रितास्ततो लोकाशयेनोच्यते ब्रह्मेति ज्ञानं ज्योतिर्वेति । ९९ ज्ञानम् । ३०० अनन्ता अत एवामिता ये सिद्धा इतिनामानः । १ ज्ञानं ज्योतिर्वा । २ सिद्धज्ञानाश्रितम् ।

समाश्रितो ब्रह्मयथार्थवेदिभिः ॥ ७ ॥
एवं सति प्राज्ञवराः कथं न तत्
क्षेत्रस्य साङ्कर्यमथो भवेत्तथा ।
परस्परालिङ्गितब्रह्मणो ऽप्यहो
सङ्कीर्णता केन भवेन्न तत्र ॥ ८ ॥
यथैव कस्यापि मनीषिणो हृदि
प्रभूतशास्त्राक्षरसङ्ग्रहे सति ।
साङ्कर्यमस्योरसि नैव जायते
न चाक्षराणां परिपिण्डता भवेत् ॥ ९ ॥
एवं चिदाश्लिष्टदिवः समन्ततो
न ब्रह्मभिर्ब्रह्मपरम्पराश्रितैः ।
सङ्कीर्णता ऽथो नभसा न ब्रह्मणा-
मिह प्रवीणा इति संविदा जगुः ॥ १० ॥
इत्थं हि सिद्धैः परिपूरितं शिव-
क्षेत्रं न सङ्कीर्णमहो भवेत्कदा ।
सिद्धास्तथा सिद्धपरम्पराश्रिताः
साङ्कर्यबाधारहिता जयन्ति भोः ॥ ११ ॥

इति जैनतत्वसारे जीवकर्मविचारे सूरचन्द्रमनःस्थिरीकारे
एकसिद्धक्षेत्रे ऽनेकसिद्धावस्थानाभिधानोक्तिलेशो
नवमो ऽधिकारः ॥

---

३ ब्रह्मशब्दार्थवेदीभिः । ४ मिथोमिलितज्ञानस्य ज्योतिषो वा ।

# अथ दशमो ऽधिकारः

प्रश्नः पुनः पृच्छ्यत एष पूज्या
निगोदजीवानधिकृत्य तद्वत् ।
निगोदजीवाश्च निगोद एव
तिष्ठन्ति केनाशुभकर्मणा ते ॥ १ ॥

यत्ते हि जन्मात्ययमाचरन्तः
कर्माणि कर्त्तुं न लभन्ति वेलाम् ।
तत्कर्मणा केन परेतदुःखा-
नन्तव्यथां ते ऽनुभवन्ति दीनाः ॥ २ ॥

ये तेषु केचिद्व्यवहारराशि-
मायान्ति ते स्युः क्रमतो विशिष्टाः ।
राशेः पुनर्ये व्यवहारनाम्नो
निर्गत्य जीवा अभियान्ति ते ऽपि ॥ ३ ॥

निगोदजीवत्वमथो लभन्ते
कथं व्यवस्था कुत आविरस्ति ।
निशम्यतां सम्यगयं विचारो
विचारसञ्चारितचित्तवृत्ते ॥ ४ ॥

---

५ मरणम् । ६ परेता नारकास्तेषां यानि दुःखानि तेभ्यो ऽप्यनन्ता व्यथा येषां ते ।

निगोदजीवेषु सदैव दुःखं
यदस्ति तत्तादृशजातिभावात्
तथाविधक्षेत्रजनिप्रलम्भा-
न्महार्त्तिदोदर्कतथाप्रणोदात् ॥ ५ ॥

यथैव लोके लवणोदवारि
क्षारं सदा दुःसहकर्मयोगात् ।
अनन्तकालेऽपि भवेन्न पेयं
यन्नैव वर्णान्तरमाश्रयेत ॥ ६ ॥

अनन्ततोऽनन्ततरस्त्वनेहा
बभूव वार्द्धेर्लवणोदनाम्नः ।
विनेदृशं कर्म न नाम वाच्यं
तत्कुत्र दुष्कर्म कृतं जलेन ॥ ७ ॥

यत्रापि गङ्गादिमहानदीभवं
जलं गतं तद्गतरूपि तद्रसं ।
निगोदकेषु व्यवहारराशितो
जीवा गतास्तेऽपि भवन्ति तत्समाः ॥ ८ ॥

तद्वारि मेघस्य मुखं समाप्य
पेयं भवेच्चाथ सुखीभवन्ति ।
एवं निगोदादपि निर्गता ये

---

७ उत्तरकालतादृक्प्रेरणात् । ८ दुष्कर्म । ९ लवणोदस्य वारि ।

संलभ्य जीवा व्यवहारराशिम् ॥ ९ ॥
यद्वागमज्ञस्य[10] नरस्य कस्यचित्
हृदन्तरोच्चाटनमन्त्रवर्णाः ।
तिष्ठन्ति तैः किं कृतमत्र दुःकृतं
यदीदृशं नाम[11] निगद्यते जनैः ॥ १० ॥
तत्स्था हि वर्णा यदि केऽपि शस्त-
मन्त्रस्थितास्ते गदिताः प्रशस्ताः ।
सन्मन्त्रगा येऽपि च मन्त्रवर्णा-
स्तैस्युस्तथोच्चाटनदोषदुष्टाः ॥ ११ ॥
क्षेत्रं निगोदस्य यथा तथेदं
दुर्मान्त्रिकस्याशुभवर्णभृद् हृद् ।
दुर्मन्त्रवर्णाभनिगोददेहिनः
सन्मन्त्रवर्ण[12]व्यवहारिजन्मिनः ॥ १२ ॥
दृष्टान्तदार्ष्टान्तिकतेयमात्मना
संयोजनीया समभावभाविना ।
एवं च सूक्ष्मा गुरवश्च पण्डितै-
र्दृश्यास्तु दृष्टान्तगणाः स्वबुद्धितः ॥ १३ ॥
दक्षा निगोदासुभृतः समस्तं
संव्याप्य लोकं सततं स्थिताश्चेत् ।

१० मान्त्रिकस्य । ११ उच्चाटनेति दुर्नाम । १२ शुभमन्त्रवर्णवत् व्यवहारराशिगतजीवाः ।

ते केन नायान्ति दृशः पथं यके
घनीभवन्तो ऽपि न बाधयन्ति ॥ १४ ॥
सत्यं निगोदा अतिसूक्ष्मनाम-
कर्मोदयात्सूक्ष्मतरा भवन्ति ।
एकां तनुं ते ऽधिगता अनन्ता-
स्तथाप्यदृश्या ननु चर्मदृग्भिः ॥ १५ ॥
यथोग्र[13]गन्धामृत[14]देहिरामठा-
दिकोत्थगन्धो बहुधा यथा मिथो ।
श्लिष्टो ऽभितिष्ठेन्न तदन्यवस्तुनः
सङ्कीर्णता नापि नभोभुवस्तथा ॥ १६ ॥
एवं निगोदासुमतां परस्परा-
श्लेषेऽस्ति तेषामतिबाधनं सदा ।
तथापि चान्यस्य न वस्तुनो ऽस्ति
सङ्कीर्णता नैव विहायसश्च ॥ १७ ॥
यथात्र गन्धादिकवस्तुसत्ता
ज्ञेया नसा नैव दृशाभिदृश्या ।
एवं निगोदात्मभृतोऽपि जैन-
वाक्याद्विबोध्या मनसा न वीक्ष्याः ॥ १८ ॥
ते केवलज्ञानवता हि दृश्याः

---

१३ वचा । १४ कलेवर ।

यथा हि सर्वत्र रजो ऽतिसूक्ष्मम्।
उड्डीयमानं न च दृश्यते ऽक्ष्णा
न चापि राशीभवने ऽपि बोध्यम् ॥ १९ ॥
परं यदाछिन्नशुपीनरश्मि-
समुत्थवंशीत्रसरेणुरूपम्।
प्रकाशयोगादभिवीक्ष्यते तत्
दृश्यास्तथा दिव्यदृशा निगोदाः ॥ २० ॥
स्वामिन्निगोदाद्यणुमान् न्यँदन् सन्
न गौरवं केन लभेद्गुणेन च।
यथा हि सूतो विविधांश्च धातू-
नश्नन् भजत्येप गरिष्ठतां नो ॥ २१ ॥
वस्त्रं यथा चम्पकपुष्पवासितं
यथा च कृष्णागरुधूपधूपितम्।
न मौलभारान्ननु याति गौरवं
दृष्टान्त एकः पुनरत्र शास्त्रगः ॥ २२ ॥
सिद्धो यथा तोलकमानपारदः
स्विन्नः सहेम्नः शततोलकेन।

---

१५ आच्छादितमंदिरे जातं यत् छिद्रं तत्रागता ये इनरश्मयः सूर्यकिरणास्तेभ्य उत्पन्ना ये वंशीकाराः किरणप्रतिबिम्बास्तत्र यदु-ड्डीयमानं रजस्तत्त्रसरेणुरित्युच्यते तस्य यद्रूपं दर्शनम्। १६ आहरन्।

न वर्धते ऽसौ निजतोलकाद्भरा-
देवं न जीवे ऽपि भरः कृताहृतौ[17] ॥ २३ ॥

यथा पुनर्मारुतपूर्णमध्या
दृतिः स्वभारादधिको भवेन्नो ।
तथैव जीवो विहिताशनो ऽपि
स्वगौरवान्नाधिकगौरवाश्रित् ॥ २४ ॥

साधो निगोदाङ्गभृतो ऽतिदुःखिताः
स्युः कर्मणा केन निगद्यतामिदम् ।
इमं विना केवलिनं न कश्चि-
द्विज्ञो ऽपि विज्ञातुमलं विचारम् ॥ २५ ॥

तथापि च प्रत्ययहेतवे ऽदो
निगद्यते किंञ्चन कर्मजातम्[18] ।
यद्यप्यमी अत्र निगोदजीवाः
स्थूलास्रवान्सेवितुमक्षमा हि ॥ २६ ॥

परन्त्वमी एकतनुं श्रिता य-
त्तिष्ठन्त्यनन्ताः प्रतिजन्तुविद्धाः ।
पृथक्पृथग्देहगृहप्रमुक्ताः[19]
परस्परद्वेपकरात्मसंस्थाः[20] ॥ २७ ॥

---

१७ कृताहारे । १८ कर्मप्रकारम् । १९ प्रत्येकत्वाभावात् भिन्नभिन्नशरीररूपगृहरहिताः । २० परस्परद्वेपकारणात्मना तैजस-कार्मणाख्येन संस्था संस्थितिर्येषां ते ।

अत्यन्तसङ्कीर्णनिवासलाभा-
दन्योन्यसम्बद्धनिकाच्यवैराः ।
प्रत्येकं[२१]मप्येष्वभिवर्त्तमान-
अनन्तजीवैस्तत उग्रवैरम् ॥ २८ ॥

एकस्य जन्तोर्यदपीह वैर-
मेकेन जीवेन तदप्यजेयम् ।
एकस्य जन्तोर्यदनन्तजीवै-
र्वैरं भवेच्चेत्तदनन्तकालैः ॥ २९ ॥

कथं न भोग्यं पुनरेधमानं
तदेव तेनैव ततोऽप्यनन्तम् ।
एवं निगोदासुमतां न वैरं
सान्तं न दुष्कर्म च नापि कालः ॥ ३० ॥

लोके यथा गुप्तिगृहाश्रिताना-
मन्योन्यसंमर्दनिपीडितानाम् ।
प्रत्येकमाबद्धनिकामवैर-
भाजां नराणां किल कर्मबन्धः ॥ ३१ ॥

भावस्त्वमीषामल्मीदृशः स्या-
द्यदेषु कश्चिन्म्रियते ऽपयाति वा ।
तदाहमासीय सुखेन भव्य-

---

२१ एकमेकं मन्यात्मनात्मानं संनिश्य २ एकीभूय तिष्ठन्ति ।

मायाति किञ्चिद् घनमंशतश्च ॥ ३२ ॥
इत्यादिकं वैरमतुच्छमीदृक्
प्रवर्धमानं प्रतिबन्दि यस्मात् ।
तस्मादमीषामतिदुष्कृतं स्या-
देवं निगोदाङ्गभृतामपीक्ष्यम् ॥ ३३ ॥
तथातिसङ्कीर्णकपञ्जरस्थिताः
विद्वेषभाजश्चटकादिपक्षिणः ।
जालादिगा वा तिमयो मिथोभव-
द्विबाधनद्वेषचिताः सुदुःखिनः ॥ ३४ ॥
तथा पुनस्तस्करके निहन्य-
माने च सत्यामनले विशन्त्याम् ।
कौतूहलार्थं परिपश्यतां नृणां
द्वेषं विनोत्तिष्ठति कर्मसंश्रयः[22] ॥ ३५ ॥
बुधास्तमाहुः किल सामुदायिकं
भोगो यदीयो नियतो ऽप्यनेकशः ।
एवं हि चेत्कौतुकतः कृतानां
स्वकर्मणामत्र सुदुर्विपाकः ॥ ३६ ॥
अन्योन्यबाधोत्थविरोधजन्मना-
मनन्तजीवैः कृतकर्मणां तदा ।

---

२२ बन्धः ।

भोगो ऽप्यनन्ते ऽपगते हि काले
निगोदजीवैर्न हि जातु पूर्यते ॥ ३७ ॥
पूज्या निगोदासुमतां मनो ऽस्ति नो
केनेदृशं तन्दुलमत्स्यवद् भृशम्।
प्रजायते कर्म यतस्त्वनन्त-
कालप्रमाणं परिपाक एवम् ॥ ३८ ॥
सत्यं यदेतन्न मनो ऽस्त्यमीषां
तथापि चान्योन्यविबोधनोत्थम्।
दुष्कर्म तूत्पद्यतएव यद्व-
द्विषं निहन्त्येव यथा तथाहतम् ॥ ३९ ॥
सञ्ज्ञाश्चतस्रो ऽप्यथवेषु मिथ्या
योगैः कषायो विरतिश्च सन्ति।
इमानि सर्वाण्यपि कर्मबन्ध-
बीजान्यनन्तैस्त्वधिको विरोधः ॥ ४० ॥
एवं निगोदासुमतां निदर्शनैः

---

२३ पीडन। २४ यथा। २५ विषं ज्ञातमज्ञातं वा भक्षितं मा-
रे तत्र ज्ञाते तु स्वयमन्यो वा कश्चिदुपायमपि कृत्वा जीवेदपि प-
तं तु मारयत्येवेति शेषः अत एवैषां मनो विना समुत्पन्नं परस्पर-
न्तकाले ऽपि भुज्यमानं न पूर्णं स्यादिति तत्त्वम्। २६ निगोदेषु।
मिथ्यात्वम्। २८ काययोगादिभिः।

किञ्चित्स्वरूपं गदितं यथामति ।
यतस्त्विदं नो किल को ऽपि वक्तुं
शक्तो विना केवलिनं कुलीनाः ॥ ४१ ॥

इति जैनतत्त्वसारे जीवकर्मविचारे सुरचन्द्रमनःस्थिरीकारे निगोदजीवानां क्षेत्रस्थितिगमागमकर्मबन्धादिनिदर्शनोक्तिलेशो दशमो ऽधिकारः ॥



# अथ एकादशोऽधिकारः

स्वामिन्निदं विश्वमशेषमित्थं
पूर्णं निगोदैर्यदि तर्हि तत्र ।
कर्माण्यथो पुद्गलराशयोऽपि
धर्मास्तिकायादि कथं हि मान्ति ॥ १ ॥

सत्यं यथा गान्धिकहट्टमध्ये
कर्पूरगन्धः प्रसृतोऽस्ति तत्र ।
कस्तूरिकाजातिफलादिसर्व-
वस्तूत्थगन्धो ननु माति किं न ॥ २ ॥

तत्रास्ति मार्त्तण्डतपस्तथैव
धूपस्य धूमस्त्रसरेणवोऽपि ।
वायुश्च शब्दश्च सुमादिगन्धो
मातो यथा स्यादथ चावकाशः ॥ ३ ॥

पुनश्च कस्यापि विचक्षणस्य
वक्षोन्तराशास्त्रपुराणविद्याः ।
वेदाः स्मृतिर्मन्त्रकलाश्च यन्त्र-
तन्त्राणि सर्वाण्यभिधानकोषाः ॥ ४ ॥

ज्योतिर्मतिर्व्याकरणादिविद्या

रागा रसाशीर्विषयाः कषायाः ।
वार्त्ता विनोदा वनिताविलासा
दानादयो मत्सरमोहमैत्र्यः ॥ ५ ॥
क्षान्तिर्धृतिर्दुःखसुखे गुणास्त्रय
आम्नायशङ्काभयनिर्भयाधयः ।
ध्यानादयो मान्ति यथैव तद्वद्
द्रव्याणि लोके ऽपि वसन्ति नित्यम् ॥ ६ ॥
लोके यथा वा वनषण्डमध्ये
रेणुस्तथामी त्रसरेणवो ऽपि ।
सूर्यातपो वह्नितपः सुमानां
गन्धः समीरः पशुपक्षिशब्दः ॥ ७ ॥
वादित्रनादश्छदमर्मरादि
सर्वाणि मान्तीह तथावकाशः ।
एवं च द्रव्यैर्निचिते ऽपि लोके
ऽवकाश एषो ऽपि च तादृशो ऽस्ति ॥ ८ ॥

इति जैनतत्त्वसारे जीवकर्मविचारे सूरचन्द्रमनःस्थिरीकारे जीवपुद्गलधर्मास्तिकायादिपूर्णे ऽपि लोके तथैवावकाशोक्तिलेश एकादशो ऽधिकारः ॥

# अथ द्वादशो ऽधिकारः



पृच्छामि पूज्यान् प्रणयादिदानीं
जीवस्तु कर्माणि शुभाशुभानि ।
भुङ्क्ते सुखैषी किमु दुःखितः सं-
स्तदास्ति कश्चिन्ननु कर्मनोदकः ॥ १ ॥

विधिर्ग्रहो वा परमेश्वरो वा
कर्त्ता यमो वा भगवानिहास्तु ।
प्रणोदकः कर्मगणस्य येन
दुःखं सुखं वा परिभोज्यते जगत् ॥ २ ॥

नैवं यदेतानि भवन्ति कर्म-
नामानि शास्त्रे पठितानि तद्यथा ।
भाग्यं स्वभावो भगवानदृष्टं
कालो यमो दैवतदैवदिष्टम् ॥ ३ ॥

अहो विधानं परमेश्वरः क्रिया

---

२९. जीवो हि स्वभावात् सुखैषी दुःखद्वेषी । तेन सुखहेतुशुभकर्माणि स्वेच्छया भुङ्क्ताम् । परं दुःखकारणमशुभकर्म भोक्तुं स्वेच्छया न समीहते । तदा ऽशुभकर्मभोगे नु कश्चित् प्रेरको ऽस्तु येनायमात्मा ऽशुभकर्मबलात् दुःखं भोज्यते । स च प्रेरको लौकिकः कश्चिद्दृश्यमाणो ऽस्ति पृच्छाकारः प्रेरकनुन्नां कर्मभुक्तिमाह । तदा कर्मवादी नैवमित्यादिवृत्तत्रयेणोत्तरमाह ।

पुराकृतं कर्म विधा विधिश्च ।
लोकः कृतान्तो नियतिश्च कर्त्ता
प्राक्कीर्णप्राचीनविधातृलेखाः ॥ ४ ॥
इत्यादिनामानि पुराकृतस्य
शास्त्रे प्रणीतानि तु कर्मतत्त्वगैः[30] ।
तदात्मनो[31] न स्वकर्मणो विना
सुखस्य दुःखस्य च कारको परः ॥ ५ ॥
स्थाने त्वजीवानि पुनर्जडानि
कर्माणि किं कर्त्तुमिह क्षमाणि ।
कश्चित्तदेषां परिणोदको ऽस्तु
यच्छक्तितो ऽमूनि[32] सहीभवन्ति[33] ॥ ६ ॥
इदं तु सत्यं परमत्रकर्मणा-
मेषां स्वभावो ऽस्ति सदेदृगेव ।
विनेरकं यान्यखिलात्मनः स्वयं
स्वरूपतुल्यं फलमानयन्ति ॥ ७ ॥
यतो ऽभिवर्त्तन्त इमे ऽत्र जीवा
अजीवसम्बन्धमधिश्रिताः सदा ।
जीवन्त्यजीवन्नथ जीवितार[34]-
स्त्रैकालिकः सङ्गम एभिरेषाम्[35][36] ॥ ८ ॥

---

३० कर्मस्वभावज्ञः । ३१ जीवस्य । ३२ कर्माणि ३३ समर्थीभवन्ति । ३४ जीविष्यन्ति । ३५ कर्मभिः । ३६ आत्मनाम् ।

षड्द्रव्य[३७]मध्ये खलु द्रव्यपञ्चकं
निर्जीवमेवं समवायपञ्चकम् ।
एतैरजीवैरपि जीवसङ्कुलं
जगत्समस्तं ध्रियते निरन्तरम् ॥ ९ ॥
जीवास्त्विमे स्वोर्जितकर्मपुद्गलैः
सन्तः श्रिता दुःखसुखाश्रयीकृताः ।
द्रव्याणि षट् यत्समवायपञ्चक-
मेतन्मयं ह्येव जगन्न चापरम् ॥ १० ॥
ततः सचेतः प्रणिचेत चेतसा
जीवेभ्य एते सकला अजीवाः ।

---

३७ धर्माधर्माकाशपुद्गलजीवास्तिकायकाललक्षणानि षड् द्रव्याणि, तन्मध्ये जीवास्तिकायमेकं विमुच्य शेषाणि पञ्च द्रव्याणि अजीवानि, एवं कालस्वभावनियतिपुराकृतपुरुषकारलक्षणपञ्चसमवायोऽप्यजीवः एभिर्दशभिरजीवैरशेषं जीवसंभृतं जगत् सन्ध्रियते । यथा धर्मास्तिकायेन चलति । अधर्मास्तिकायेन तिष्ठति । आकाशास्तिकायेनावकाशं लभते । पुद्गलास्तिकायेनाहारविहारादिकरोति । कर्माण्यत्रान्तर्भवन्ति । यैरजीवरूपैरयं जीवः सुखदुःखभाग् भवति तानि कर्माणि जीवः कालादिपञ्चसमवायसामर्थ्यात् गृह्णाति धारयति भुङ्क्ते शमयतीति । एवं नवापि वस्तूनि अजीवानि जीवानां जीवनोपायाः । तत्र कालस्तु भूतभविष्यद्वर्तमान आयुरादिसर्वप्रमाणवस्तुप्रमाणकर इति ।

यतो यथा ऽजीवैर्बलप्रणोदिता[38]
जीवास्तथा स्युः सुखदुःखभाजः ॥ ११ ॥
स्वभाव एषो ऽस्ति यतस्तु जीवा
गृह्णन्ति कर्माणि शुभाशुभानि ।

---

पृष्ठ ६८ उपर पहेली चार लिटि पछी उमेरी वांचो.

स्वकालसीमानमवाप्य कर्मा-
ण्यमूनि चैषां सुखदुःखदानि ॥ १२ ॥
चेदित्थमेवेति तदायमात्मा
गृह्णाति कर्माणि शुभाशुभानि ।

---

विलम्ब्य कालं निजकारमात्मकम् ।
सुखं तथा दुःखमिमं नयन्ति
कुतो विना प्रेरकमेतदर्थम्[40] ॥ १४ ॥
सत्यं तु कर्माणि जडानि सन्ति
नाभोगकालं निजकं विदन्ति ।

---

३८ अजीवा धर्माधर्माकाशपुद्गलकालस्वभावनियतिपूर्वकृत-पुरुषकारद्रव्यक्षेत्रकालभावलक्षणास्तेषां यद्बलं तेन प्रेरिता व्यापारिताः सन्तो जीवाः सुखदुःखभाजो भवन्ति । पुद्गलेष्वेव कर्माण्यन्तर्भवि-ष्यन्ति इति भावः । ३९ ग्रहणशीलस्वभावात् । ४० वाञ्छनीयम् ।

आत्मापि दुःखानि न भोक्तुकाम-
स्तथापि दुःखान्ययमाश्रयेत ॥ १५ ॥
द्रव्या[41]दिसामग्र्यतथाऽनिवार्य-
शक्त्यैव कर्माणि तु तादृशान्यपि ।
स्फुटानि भूत्वा स्वककर्तृकं बला-
दात्मानमेनं ननु दुःखयन्ति ॥ १६ ॥ युग्मम् ॥
यथोष्णकालादिऋतौ समेते
कश्चिज्जनः शीतलवस्तुसेवी ।
भृशादिकाम्लादिकरम्यभोजी
स्यात्तस्य तद्योगसमुत्थवातः ॥ १७ ॥
वर्षाऋतुं प्राप्य पुरु[42] प्रकुप्यति
प्रायो वपुःस्थः समीर उग्रः ।

---

४१ द्रव्यमादौ येषां तानि द्रव्यादीनि द्रव्यक्षेत्रकालभावरूपाणि समग्रवस्तूत्पत्तिस्थितिनाशहेतुभूतानि तेषां सामग्र्यं सामग्रीसमवायस्तस्य तथेति तादृशी अनन्यरूपा सा चासौ अनिवार्या ऽप्रतिहता बलवती वा सा चासौ शक्तिश्च तया प्रेरकभूतया तादृशान्यपि जडान्यजीवानि च कर्माणि द्रव्यादिसामग्र्यां सत्यां प्रकटीभूय स्वेषामात्मीयानां कारकं कर्त्तारं बलादेनमात्मानं दुःखद्वेषिणमपि दुःखयन्ति दुःखिनं कुर्वन्ति अत एव कर्त्रादिप्रेरकं विनैव द्रव्यक्षेत्रकालभावसामग्र्या प्रेरकभूतया जडान्यपि कर्माणि कञ्चित् कालमात्मनि स्थित्वापि ततः प्रकटीभूया-त्मानं दुःखयन्ति सुखयन्ति वा न तु कर्त्रादिप्रेरकप्रेरितानि इति भावः ।
४२ भृशं ।

लब्ध्वा च कालं शरदाख्यमेष
प्रायेण संशाम्यति पित्तभावात्[43] ॥ १८ ॥

एवं हि वातादिकवस्तुनस्तू-
त्पत्तिस्थितिप्रान्त[44]दशात्रये ऽपि ।
आत्माश्रितस्यास्य न कश्चिदन्यो
विनैव कालादिकमत्र हेतुः ॥ १९ ॥

कर्मग्रहः स्वेप्सितभुक्तिवत्स्यात्
द्वयोस्तु[45] शान्तिस्थितिकार्यनेहा[46] ।
समस्तदात्मार्जितकर्मणां हि
भुक्तिश्च शान्तिः किल कालद्रव्यैः ॥ २० ॥

एवं तु कालो गदितो[47] ऽस्ति कर्मणो
वातादि[48]वस्तुत्रितयस्य चापि ।
परं यदा कश्चनशान्त्युपाय
उग्रो भवेत्तर्ह्यपि याति चान्तरात् ॥ २१ ॥

किञ्चित्कदाचित्स्वदनं यदात्मनो
वातादिकृत्तत्क्षणतो ऽपि जायते ।
कर्माणि कानीह तथात्मनो ऽस्यो-

---

४३ उत्पत्तेः । ४४ नाश । ४५ कर्मवातयोः । ४६ कालः । ४७ अर्थात् प्रमाणभूततया । ४८ वातपित्तश्लेष्मरूपवस्तुत्रयस्य ।

आणि क्षणात्तत्फ[49]लदान्यनीरकम्[50] ॥ २२ ॥

यदा पुनः स्त्री पुरुषं भजन्ती
यदृच्छया स्वार्थपरा विनेरकम् ।
विपाककाले परिपूर्णतां गते
प्रसूयमाना सुखिताथ दुःखिता ॥ २३ ॥

एवं तु कर्माण्यपि दुष्टशिष्टा-
न्यनीरकाण्येव निजात्मगानि ।
स्वं कालमाप्य प्रकटीभवन्ति यद्
दुःखं सुखं वाभिनयान्ति देहिनम् ॥ २४ ॥

यद्वातुरः को ऽप्यगदान्[51] किलाहरन्
जानाति नासा[52]वहितान् हितानथ ।
तदीयपाकस्य गते तु काले
सुखं तथा दुःखम[53]यं लभेत ॥ २५ ॥

कर्माण्यपीत्थं पुनरेष आत्मा
गृह्णन् न जानाति शुभाशुभानि ।
यदा तु तेषां परिपाककाल-
स्तदा सुखी दुःखयुतो ऽथवा स्वयम् ॥ २६ ॥

विषं तथा कृत्रिम[54]मीदृशं स्या-

---

४९ सुखदुःखादिरूप । ५० नास्ति ईरकः प्रेरको यत्र फलादि-दानकर्मणि तदनीरकम् तत्क्रियाविशेषणमेतत । ५१ औषधानि । ५२ जनः । ५३ आतुरको जनः कश्चित । ५४ परिकर्मितम् ।

तत्कालनाशाय तथैकमासात् ।
द्विमासषण्मासकवर्षकाल-
द्विवर्षवर्षत्रयतो ऽपि नाशकृत् ॥ २७ ॥
इत्थं च कर्माण्यपि भूरिभेद-
भिन्नास्थितीनीह भवन्ति कर्त्तुः[55] ।
निजे निजे काल उपागते तु
तादृक्[56] फलं तानि वितन्वते स्वतः ॥ २८ ॥
सिद्धो[57] रसो[58] वैष भवेदसिद्धः
सर्वो गृहीतो ऽभ्यमितेन[59] केनचित् ।
समागते तत्परिणाम[60]काले
दुःखं सुखं वा भजते तदाशकः[61] ॥ २९ ॥
तथात्मगा दुःपिटिका[62] च वालको
दुर्वातशीताङ्कसन्निपाताः ।
स्वयं त्वमी कालबलं समेत्य
तद्वन्तमात्मानमतिव्यथन्ते[63] ॥ ३० ॥
अमी तथैते ऋतवो ऽपि सर्वे

---

५५ कर्मणां कारकस्य । ५६ यादृशं कर्म स्याद्यदि शुभं कर्म तदा शुभं फलं यद्यशुभं कर्माशुभं फलं कुर्वन्तीति भावः । ५७ पक्वः । ५८ पारदः । ५९ रोगितेन । ६० परिपाक । ६१ सिद्धस्यासिद्धस्य वा पारदस्य भक्षकः । ६२ दुष्टा स्फोटिका दुःपिटिका निर्नामिकाथेत्यर्थः । ६३ पीडयन्ति ।

स्वं स्वं च कालं समवाप्य सद्यः ।
मनुर्ष्य[64]लोकाङ्गभृतो नयन्ति
सुखं तथा दुःखमिमान् स्वभावतः ॥ ३१ ॥
एवं हि कर्माणि निजात्मगानि
स्वकं स्वकं कालमवाप्य सत्वरम् ।
विना परप्रेरणमेतमात्मकं
नयन्ति दुःखं सुखमप्यथो स्वयम् ॥ ३२ ॥
तथा पुनः शीतलिकादि[65]बाला-
मयोद्भवा तस्सिरधिश्रयेत्तनुम् ।
षण्मासमात्मानमिमं तथैव
श्रयन्ति कर्माणि समेत्य यत्स्वयम् ॥ ३३ ॥
य[66]क्ष्माक्षिबिन्दूद्गतपक्षघाता
अर्धाङ्गशीताङ्गमुखा[67]मया ये ।
सहस्रघस्रैः परिपाकमेषां
वदन्ति वैद्या विदितागमा वि[68]दो ॥ ३४ ॥
इत्थं हि केषामिह कर्मणां परी-
पाकं स्वकालं समवाप्य यत्स्वयम् ।
विना परप्रेरणमत्र पण्डिताः

---

६४ मनुष्यलोकमध्यवर्तिप्राणिनः प्रति । ६५ आदिशब्दात् बो-दरिकाऽन्त्रज्वरपित्तादयः । ६६ क्षयरोग । ६७ रोगाः । ६८ ज्ञानेन ।

पठन्ति सैद्धान्तिकसिन्धुराये ॥ ३५ ॥
तापो यथा पित्तभवो दशाहं
सश्लेष्मिको[69] द्वादशरात्रमात्रम् ।
[70]सवातिकस्तिष्ठति सप्तरात्रं
त्रैदोषिकः[71] पञ्चदशाहमानम् ॥ ३६ ॥
एवं ज्वराणां परिपाककालः
स्वकः स्वकोऽयं पृथगेष उक्तः ।
यथा तथैषां कृतकर्मणामपि
पृथक् स्वकीयः स्थितिकाल एष्यः ॥ ३७ ॥
यथा यथा वा चरितं पुरात्मना
फलं ग्रहाणामिह भुज्यते तथा ।
यावत्स्वसीमां सहजादृशान्त-
र्दशादियुक्तं परिणोदकं विना ॥ ३८ ॥
कर्माणि कर्मान्तरितानि चैवं
यथात्मनानेन नतु क्रियन्ते ।
स्वकालमेषां परिपाकयुक्तं
भुङ्क्ते तथात्मा फलमीरकं[73] विना ॥ ३९ ॥
कर्मेदमाहुः कतिधा बुधाः सुधा[74]-

---

६९-७१ तापः । ७२ वाञ्छनीयः । ७३ प्रेरकम् । ७४ अमृतस्राविण्या ।

किरा गिरौ[७५] त्वं शृणु दक्षिण क्षणम् ।
[७६]भङ्गीचतुष्केन चतुर्विधं त-
त्त्राद्य[७७]मत्रा[७८]चरितं त्विहोद[७९]येत् ॥ ४० ॥
शस्तं तथाशस्तमहो यथा भुवि
सिद्धा[८०]य वा साधुजनाय भूभृ[८१]ते ।
श्रियै[८२]इह स्वल्पमपि प्रदत्तं
चौर्याद्यशस्तं पुनरत्र नाशकृत् ॥ ४१ ॥
भेदो द्वितीयोऽत्र[८३]कृतं परत्र
कर्मोदयेदत्र यथा प्रशस्यम्[८४] ।
तपोव्रताद्याचरितं सुरत्वा-
दिदं तदन्यन्नरकादिदायि ॥ ४२ ॥
सत्या यथा सत्त्वमिहाश्रितं पुनः
शूरेण शौर्यं परजन्मभोगदम् ।
तृतीयभेदस्तु परत्र कर्म
निर्मातमत्रासुखसौख्यदायि ॥ ४३ ॥

---

७५ वाण्या । ७६ इदं कर्मसिद्धान्ते चतुर्धोक्तं । यथा इह लोए कडा कम्मा इह लोए वेज्जन्ते, इह लोए कडा कम्मा परलोए वेज्ज-न्ते, परलोए कडा कम्मा इह लोए वेज्जन्ते, परलोए कडा कम्मा परलोए वेज्जन्ते इति चतुर्भङ्गी उक्ता सात्र यथा संवाच्या । ७७ कर्म । ७८ कृतम् । ७९ अत्रैवोदयं यायात् । ८० सिद्धपुरुषाय रसासि-द्धादिमहापुरुषाय । ८१ राज्ञे । ८२ लक्ष्म्यै । ८३–८४ कर्म ।

एकत्र[८५] पुत्रे तु तथा प्रसूते
दारिद्र्यमात्रादिवियोगयोगः ।
अस्य ग्रहा अप्यथ जन्मकुण्डली-
मध्ये न शस्ताः कृतकर्मयोगात् ॥ ४४ ॥

अन्यत्र पुत्रे तु तथा प्रजाते
सम्पत्तिमात्रादिसुखं प्रभुत्वम् ।
अपि ग्रहा अस्य तु जन्मपत्रिका-
मध्ये विशिष्टाः पतिताः सुकर्मतः ॥ ४५ ॥

चतुर्थभेदस्तु परत्र कर्म
कृतं परत्रैव फलप्रदं भवेत् ।
यदत्र जन्मे[८७] विहितं तृतीय-
भवे विधत्ते फलमात्मगासुकम् ॥ ४६ ॥

येनात्र जन्मे व्रतमुग्रमाश्रितं
प्रागेव तस्मात्प्रातिबद्धमायुः
नृदेवपश्वादिभवोत्थमल्पं
तदा ततोऽन्यत्र भवेद्भवेऽस्य तत् ॥ ४७ ॥

दीर्घायुषा भोज्यमहो महत्फलं
द्रव्यादिसामग्र्यतथोदयाच्च ।
यथात्र केनापि च वस्तु किञ्चि-

८५ । एकस्मिन् । ८६ प्राप्तिः । ८७ जन्मशब्दोऽदन्तोऽप्यस्ति ।

त्त्रातं प्रगेमे भवितेत्यत्रेत्य ॥ ४८ ॥

द्रव्यादिकालादितथाविधौजसा-
त्यर्थं तु तद्वस्तु न तेन तत्र ।
दिने प्रभुक्तं ततोऽन्यदा त-
द्भोक्तव्यमेतादृगिदं तु कर्म ॥ ४९ ॥

एवं चतुर्भङ्गिकया स्वकर्म
भोग्यं भवेदासवचः प्रमाणात् ।
कर्मस्वरूपं प्रतिवेदितुं नो
क्षमं विना केवलिनो यथार्थम् ॥ ५० ॥

ईदृग्विधं कर्म कियद्विधं स्या-
त्त्रिधेति तत्किं शृणु भण्यमानम् ।
भुक्तं च भोग्यं परिभुज्यमानं
शुभाशुभं सर्वमिदं सदक्षम् ॥ ५१ ॥

किंवद्यथा वारिदबिन्दुवृन्दं
वसुन्धरायां पतितं प्रशुष्कम्
तद्भुक्तवत्तत्र च भोग्यवत्किं
यावत्पतिष्यत्परिशोष्यमस्ति ॥ ५२ ॥

---

४८ परत्र कृतं कर्म परत्र भुङ्क्ते तत्सर्वमिदमुक्तम् । ४९ चतुर्भङ्ग्या भोक्तव्यं कर्म तत्कालिकप्रकारं स्यादित्याह । ५० सर्वं शुभं वाऽशुभं वा कर्म त्रिधा स्यात् भुक्तं भोग्यं भोज्यमानं चेति ।

निपत्यमानं परिशुष्यमाणं
यावद्यदेतत्परिभुज्यमानवत् ।
ग्राह्यो गृहीतः परिगृह्यमाणो
यथा गुडो[९१] वा किल कर्म तद्वत् ॥ ५३ ॥
संसारिजीवा व्रतिनोऽव्रता वा
तेषां तु कर्मत्रयमेतदस्ति ।
वसुन्धराया घनबिन्दुवृन्दवत्
भुक्तं च भोग्यं परिभुज्यमानकम् ॥ ५४ ॥
कैवल्यभाजस्तु यके महान्त[९२]-
स्तेषां तु कर्माणि शिलाग्रवृष्टिवत् ।
अल्पस्थितीन्येव तथापि तद्दशा[९३]-
त्रयं तु तत्रापि[९४] गवेषणीयम् ॥ ५५ ॥

---

९१ यथा मुखान्तर्गतः कवलः चर्वितः स भुक्तकर्मवत्, चर्व्यमाणकवलस्तु भुज्यमानकर्मवत्, यश्च चर्विष्यते कवलः स भोग्यकर्मवत्, इति कर्मणां कवलदृष्टान्तयोजनेति । ९२ योगिनः । ९३ सा च भुक्तादिका या दशा अवस्था तद्दशा तस्यास्त्रयं तद्दशात्रयं भोग्यभुक्तभुज्यमानकर्मलक्षणत्रयं । ९४ केवलिसत्ककर्मसत्तायां । तत्र केवली हि केवलोत्पत्त्यनन्तरं स्वायुषोन्तसमयद्वयं यावत प्रतिसमयं भुक्तभोग्यभुज्यमानकर्मा भवति, आयुषोन्तसमयादनन्तरपूर्वसमये भुक्तभुज्यमानकर्मा स्यात्, अन्तसमये तु भुक्तकर्मा न भुज्यमानकर्मा सर्वकर्मणामन्तसमये क्षयकरणात् सिद्धत्वप्राप्तेश्चात एवाग्रेऽनन्तरं वक्ष्यति सिद्धात्मनामिति ।

सर्वत्र कर्त्रादिपरप्रणोदनां
विनैव द्रव्यादिचतुष्टयस्य[95] ।
तादृक्स्वभावादिह कर्मणां त्रयी
भुक्तादिकासौ भवविमुक्तजीवगा[96] ॥ ५६ ॥
सिद्धात्मनां सिद्धतया दशात्रयी
न कर्मणां तत्कृतपूर्वनाशतः ।
भुक्ताप्यवस्था भवदेषु केवलि-
भवावसानं न तदत्र कापि सा ॥ ५७ ॥
मया विचारोऽयमवाचि कर्मणा-
मजानता लोकगतैर्निदर्शनैः[97] ।
सामान्यलोकप्रतिबोधनाय
ज्ञेयः प्रवीणैस्तु पुराणयुक्तिभिः ॥ ५८ ॥
इत्थं विना प्रेरकमत्र कर्मणां
भुक्ताविहोदाहरणान्यनेकशः ।
विचारितान्येव विचारचञ्चुरै-
स्तद्वाक्प्रमाणं किल पारमेश्वरी ॥ ५९ ॥

इति जैनतत्त्वसारे जीवकर्मविचारे भ्रमन्द्रमनःस्थिरीकारे
परप्रेरणारहितकर्मभोगोक्तिर्लेशो
द्वादशोऽधिकारः ॥

---

९५ द्रव्यक्षेत्रकालभावरूपस्य । ९६ संसारिकसिद्धिजीवसम्बन्धिनी । ९७ लोकप्रसिद्धैः ।

# अथ त्रयोदशोऽधिकारः

मुनीश केचिद् भुवि नास्तिका ये
न पुण्यपापे नरकं न मोक्षम् ।
स्वर्गं न च प्रेत्यभवं वदन्ति
को नाम तर्कः खलु तैः श्रितोऽस्ति ॥ १ ॥
ते नास्तिका दृश्यपदार्थसक्ता
नो इन्द्रियादेयविचारमुक्ताः ।
प्रत्यक्षमेकं वृणते प्रमाणं
पञ्चेन्द्रियाणां विषयोऽस्ति यत्र[९८] ॥ २ ॥
पृच्छास्ति तैः सार्धमसौ मुनीनां[९९]
चेन्नास्तिकैरिन्द्रियगोचरैः[४००] श्रितः ।
सद्वस्तु[१] दृश्यं यदि तर्हि वस्तु किं
यन्नेन्द्रियाणां विषयः समेषाम् ॥ ३ ॥
रामादिके वस्तुनि सर्वश्रोतसां[२]
किं गोचरो नेति यदाह नास्तिकः ।

---

९८ प्रत्यक्षे । ९९ आस्तिकानाम् । ४०० विषयः । १ यदेव दृश्यं इन्द्रियग्रहणीयं तदेव सत् नास्तिकानां नान्यत् । तत्र पञ्चानामपीन्द्रियाणां कस्मिन् वस्तुनि नास्तिकानां विषयोऽस्ति तद्वस्तु ते वद्रूणन्तु तत्राहुर्नास्तिकाः रामादिके । [illegible] इन्द्रियाणाम् ।

रात्रावतद्वस्तुनि शब्दरूप-
समेऽपि तद्वस्तु[३]भ्रमो न किं स्यात् ॥ ४ ॥
स[४]त्यं हि रात्रौ सकलेन्द्रियाणि
प्रायेण मुह्यन्त्यव[५]बोधहान्याः ।
तस्मादतद्वस्तुनि[६] तद्[७]ग्रहः स्यात् ।
तच्छ्रोतसां[८] चित्र सदैव सत्या ॥ ५ ॥
पुनर्यथा पश्य जनेन नीरुजा
शङ्खः सितोऽस्तीति निरीक्ष्य गृह्यते ।
पुनश्च तेनैव रुजा[९]र्दितेन
स गृह्यते किं न वहुत्थवर्णः ॥ ६ ॥
यथा पुनः स्वस्थमनाः स्वबन्धून्
जानाति नैवं मधुमत्त एषः ।

---

३ न विद्यते तत् प्रागुक्तं वस्तु रामादिकं यत्र तदवस्तु भ्रमः रामादिवस्तुभ्रमः मोहः किं न स्यात् अपि तु स्यादेवात एव रात्र्यादौ कचित्काले पुरुषेऽपि पुनरामाविषे रामाभ्रमो नास्तिकेन्द्रियाणां न भवति किन्तु भवत्येव तदा पुरुषे नीलिज्ञानात् अथवान्यस्यां स्त्रियां स्वदृष्टस्त्रिया भ्रमात् नास्तिकस्येन्द्रियज्ञानं कथं प्रमाणं स्यादित्युक्तं । ४ नास्तिकः प्राह सत्यं इति । ५ ज्ञान । ६ पुरुषादिके । ७ रामाभ्रमः । ८ आस्तिकः प्राह । ९ पाचकामलरोगपीडितेन ।

सन्त्येषु[10] तान्येव किलेन्द्रियाणि
कथं विपर्यास इयानभिष्यात्[11] ॥ ७ ॥
पुरातनं[12] ज्ञानमथेन्द्रियाणां
सत्यं तथा चाधुनिकं प्रमाणम् ।
नेदं वरं किन्तु पुरातनं सत्
तान्येव खानीह तु को विशेषः ॥ ८ ॥
पूर्वं मनोऽभूदविकारि यस्मात्

---

१० एषु अस्त्रीस्त्रीदर्शक–काचकामलीरोगपीडित–मत्तेषु तान्येव स्वकीयसम्बन्धान्येव तादृशाकाराण्येव स्वस्थानस्थान्येव सन्ति तर्हि कथं भ्रमो भवति । नास्तिकस्य तु रात्रिरोगमत्ततादयो न वाच्याः स्युः गृहीतैकप्रत्यक्षप्रमाणस्य नास्तिकस्य रात्र्यादीनां पदार्थानामाकारवर्णगन्धरसस्पर्शादिशून्यानां करतलामलकवत् दर्शयितुमशक्यत्वात् । ततो नास्तिकस्य तेषामेवेन्द्रियाणामप्रमाणता कथं स्यादित्येतदेवाह । ११ स्यात् । १२ नास्तिकः पृच्छ्यते हे नास्तिक त्वं ब्रूहि पुरातनं प्राचीनं ज्ञानं यदिन्द्रियाणामभूत् स्त्रियां स्त्रीज्ञानं सितं ज्ञानं समीक्ष्य शङ्खग्रहणलक्षणं अमत्तस्य मात्रादिषु तज्ज्ञानं इत्येतत्पुरातनं ज्ञानं सत्यं किंवाधुनिकं साम्प्रतिकं पुरुषे स्त्रीग्रहणं पीतत्वप्राप्तशाङ्खशङ्खत्वेन ग्रहणं, मत्तस्य मात्रादिषु स्वैरिन्द्रियैरेव भार्यात्वेन ग्रहणमेवं स्वामिनि सेवकत्वेन ग्रहणमित्यादि मिथ्यारूपं तत्सत्यं इति पृष्टे नास्तिकः प्राह नेदं वरं आधुनिकं ज्ञानं यदुक्तं तत्सत्यं न । किन्तु पुरातनमेव तेषां तद्वस्तुनि तद्ग्रहणलक्षणं ज्ञानं तदेव सत्यं अथैषां इन्द्रियाणां सत्यासत्यज्ञानाङ्गीकारः कथं क्रियते इति पृष्टो नास्तिकः प्राह पूर्वमिति ।

तत्साम्प्रतं यद्विकृतं बभूव ।
अतो मिथो भेद इयान् स कस्य
भेदोऽस्त्ययं मानसिकस्तदत्र ॥ ९ ॥
दृश्यं मनो नास्ति न वर्णतो वा
कीदृग् निवेद्यं भवतीति भण्यताम् ।
न दृश्यते चेन्नहि वर्तते तत्
खान्येव तानीह कथं विकारः ॥ १० ॥
अयं विकारस्तु बभूव साक्षाद्
यं सर्व एते निगदन्ति तज्ज्ञाः ।
त्वं पश्य चेद्दृष्टपदार्थकेष्वपि
मोहो भवेदित्थमिहैव खानां ॥ ११ ॥
तर्हीन्द्रिज्ञानमिदं हि केन
सत्यं सता सर्वमितीव वाच्यम् ।
तदेव सत्यं यदिहोपकारिण
उपादिशन् दिव्यदृशो गतस्पृहाः ॥ १२ ॥
स्वस्थं मनस्त्वं बुध सन्निधाय
विचारमेतं कुरु तत्त्वदृष्ट्या ।
शब्दा इमे ज्ञानवतोपदिष्टा—

---

१३ सांसिद्ध ।

स्तेऽमी यथार्था भवतापि[१४] वाच्याः ॥ १३ ॥
आनन्दशोकव्यवहारविद्या
आज्ञाकलाज्ञानमनोविनोदाः ।
न्यायानयौ चौर्यकजारकर्मणी
वर्णाश्च चत्वार इमे तथाश्रमाः ॥ १४ ॥
आचारसत्कारसमीरसेवा
मैत्रीयशोभाग्यबलं महत्त्वम् ।
शब्दस्तथार्थो[१५]दयभङ्गभक्ति-
द्रोहाश्च मोहो मदशक्तिशिक्षाः ॥ १५ ॥
परोपकारो गुणखेलनाक्षमा
आलोचसङ्कोचविकोचलोचाः ।
रागो रतिर्दुःखसुखे विवेक-
ज्ञातिप्रियाः[१६] प्रेमदिशश्च देशाः ॥ १६ ॥
ग्रामः पुरं यौवनवार्धकास्था
नामानि सिद्ध्यास्तिकनास्तिकाश्च ।

---

१४ अपिः समुच्चयार्थस्तेन मया वाच्या एव पुनर्भवता त्वयाप्येते मद्वद्वाच्या इति । १५ अर्थोऽभिधेयः शब्दोऽयमयं चार्थ इति च क उच्यते किं शब्दार्थयोः कश्चिदाकारादिरस्ति। १६ अयं मे प्रियोऽयं चाप्रियश्चेति यदा दृश्यते तदा तद्वस्तु एव दृश्यते परं येन कृत्वा प्रियशब्दः प्रवर्तते सद्गुणस्तु दर्शयितुं न शक्य एवमन्यत्रापि ।

कषायमोषौ विषयाः पराङ्मुखा-
श्चातुर्यगाम्भीर्यविषादकैतवम् ॥ १७ ॥
चिन्ताकलङ्कश्रमगालिलज्जा-
सन्देहसंङ्ग्रामसमाधिबुद्धि ।
दीक्षापरीक्षादमसंयमाश्च
माहात्म्यमध्यात्मकुशीलशीलम् ॥ १८ ॥
क्षुधापिपासा[17]र्घमुहूर्त्तपर्व-
सुकालदुःकालकरालकल्यर्थम् ।
दारिद्र्यराज्यातिशयप्रतीति-
प्रस्तावहानिस्मृतिवृद्धिगृद्धि ॥ १९ ॥
प्रसाददैन्यव्यसनान्यसूया-
शोभाप्रभावप्रभुताभियोगाः ।
नियोगयोगाचरणाकुलानि
[19]भावाभिधाप्रत्यययुक्तशब्दाः ॥ २० ॥

---

१७ अर्घः मूल्यम् । १८ आरोग्यम् । १९ भावः शब्दस्य प्रवृ-त्तिनिमित्तं तस्याभिधाभिधानं कथनं वचनमिति यावत् तदर्थे ये प्र-त्ययाः तत्वयण्इमनणादयस्तैर्युक्ता शब्दास्ते तथा यथा विष्णोर्भावः विष्णुता विष्णुत्वं वैष्णवं दार्ढ्यम् द्रढिमा इत्यादिभावप्रत्ययान्तैः सर्वैरपि लोकमध्यस्थशब्दै योऽर्थो भवति स नास्तिकेन न वाच्यः स्यात् तस्य पञ्चभिरिन्द्रियैर्ग्रहीतुमशक्यत्वादिति यथासम्भवं वाच्यम् यद्यपि चौर्यमाहात्म्यदारिद्र्यराज्यादिशब्दा अत्रैवान्तर्भूतास्तथाप्यती-वप्रसिद्धत्वादिहोपात्ता इति न पौनरुक्त्यदोषः ।

इत्यादिशब्दा बहवो भवन्ति ये<br>
जिह्वादिवत्तेन हि शब्दवन्तः ।<br>
स्वर्णादिवन्नो इह रूपवन्तः<br>
पुष्पादिवन्नोऽत्र च गन्धबन्धुराः ॥ २१ ॥<br>
सितादिवन्नो रसवन्त एवं<br>
न स्पर्शवन्तः पवनादिवच्च ।<br>
किन्त्वेककर्णेन्द्रियरूपग्राह्या-<br>
स्ताल्वोष्ठजिह्वादिपदे प्रवाच्याः ॥ २२ ॥<br>
स्वस्वोत्थचेष्टादिविशेषगम्याः<br>
स्वाभ्याससम्प्राप्तफलानुमेयाः ।<br>
स्वनामयाथार्थ्यकथानिधायिनः[20]<br>
स्वीयप्रतिद्वन्द्विविनाशकारिणः[21] ॥ २३ ॥<br>
सद्यो[22] विरोध्युत्थनिजाह्वयान्ताः

२० यथा नन्दनमानन्दः शोचनं शोक इत्यादिकथनधारिणः । २१ आनन्दप्रतिद्वन्द्वी अनानन्दः शोकादिः तेनानन्देनानानन्दस्य विनाशः क्रियते एकस्य नाशेऽपरस्योपपत्तौ वस्तूनां भावाभावौ सिद्धौ एतौ तु तदा स्यातां यदा किञ्चिद्वस्तु स्यात् तत्सद्भावस्तु न साक्षात् स्वर्णादिवद्दृश्यते सर्वत्र चेष्टयैव एषां सत्ता उपदिश्यते एवं नञ्समासादिमतामेषामभावरूपेण विनाशो लक्ष्यते । २२ सद्यः शीघ्रं आनन्दादीनां विरोधिनः शोकादयः ते[illegible]म्य[illegible]नो निजाह्वयस्य आनन्दादीनां स्वनाम्नः [illegible] येषां

इतीदृशाः सर्वजनप्रसिद्धाः ।
शब्दाः स्वकीयोत्थगुणप्रधाना
वाच्या नरैरास्तिकनास्तिकैश्च ॥ २४ ॥

चतुर्भिःकलापकम्

यदीदृशा अप्यथि सिद्धशब्दा
येषां न साक्षात्कृतिरिन्द्रियैः स्वैः ।
तत्पुण्यपापादिकवस्तूनीहा—
प्रत्यक्षके[23] कस्य च खस्य[24] वृत्तिः ॥ २५ ॥

इति जैनतत्त्वसारे जीवकर्मविचारे सूरचन्द्रमनःस्थिरीकारे नास्तिकस्याप्यानन्दादिशब्दवत् पुण्यपापादिशब्दसत्तात्तिलेशः त्रयोदशोऽधिकारः



न तथा अतएव यस्मिन् क्षणे यस्मिमिन्नानन्दोत्पत्तिस्तस्मिन् क्षणे तस्मि-
न्नित्यमेव शोकाद्युत्पत्तेरभावात् शोकादीनामनुच्चार एवं सर्वशब्देष्वप्य-
यमेव धर्मोऽवसेयः । २३ पुंसः । २४ इन्द्रियस्य ।

# अथ चतुर्दशोऽधिकारः

अतो य एतन्मनुते वदावदः
प्रत्यक्षमेकं हि मम प्रमाणम् ।
तच्चिन्त्यमानं न विवेकचक्षुषाम्
शक्तं भवेत्सर्वपदार्थसिद्धये ॥ १ ॥
किं तर्हि सत्यं निजगाद नास्तिक-
स्तदुत्तरं यच्छतु शुद्धमास्तिकः ।
यदेकशब्देन निगद्यमानं
तत्सत्पदं प्राहुरिति प्रवीणाः ॥ २ ॥
तद्विद्यते यन्ननु सत्पदेन
वाच्यं भवेद्वस्तु तदत्र किं स्यात् ।
यच्छब्दजातं गदितं पुरैव
तथा पुनः किंचिदनूच्यतेऽत्र ॥ ३ ॥
कालः स्वभावो नियतिः पुराकृतं
तथोद्यमः प्राणमनोऽसुमन्तः ।
आकाशसंसारविचारधर्मा-
धर्माधिमोक्षा नरकोर्ध्वलोकौ ॥ ४ ॥
विधिर्निषेधः परमाणुपुद्गलः
कर्माणि सिद्धाः परमेश्वरस्तथा ।

इत्यादिशब्देषु न चेष्टयाऽपि
केचित्सुधीभिः प्रतिपादनीयाः ॥ ५ ॥

किन्त्वेकतः सत्पदतः प्ररूप्याः
तथैककर्णेन्द्रियग्राह्यवर्णाः ।
स्वस्वस्वभावोत्थिततत्तथाविध-
फलानुमेयाः किल केवलीक्ष्याः ॥ ६ ॥

ये सन्ति शब्दास्तु पदद्वयादिना
संयोगजास्ते भुवि सन्ति वा नो ।
यथा हि वन्ध्यास्ति सुतोऽपि चास्ति
वन्ध्यासुतश्चेति न युक्तशब्दः ॥ ७ ॥

एवं नभःपुष्पमरीचिकाम्भः-
खरीविषाणप्रमुखा अनेके ।
एतादृशा ये किल सन्ति शब्दाः
संयोगजास्ते किल नैव युक्ताः ॥ ८ ॥

कर्णेन्द्रियग्राह्यतयापि नैषा
सत्तास्ति तन्नेन्द्रियगोचरः सैन्[25] ।
केचित्तु संयोगभवा हि शब्दाः
सन्त्येव ते तद्विरहो न प्रायः ॥ ९ ॥

यथाहि गोशृङ्गनरेन्द्रकन्ञा-

---

२५ सन्यः ।

वनीरुहागोपतिभूधराद्याः ।
संयोगजाः सन्ति वियोगतश्च
शब्दा अनेके विबुधैर्विवेच्याः ॥ १० ॥

श्रोत्राक्षिमुख्येन्द्रियरूपग्राह्ये[26]
परन्त्वतन्नामानि[27] तस्य[28] नाम्नि ।
अर्थे तथान्याश्रितरूपवेषके
ज्ञानं न नेत्रश्रवसोस्तदर्थकृत् ॥ ११ ॥

यथा सिताभ्रादिसुगन्धिवस्तुषु
श्रोत्राक्षिनासारसनासमुत्थं ।
ज्ञानं यदप्यस्ति तथापि केषुचि-
त्तेषु प्रमाणं रसनावबोधनम् ॥ १२ ॥

स्वर्णादिके[29] वस्तुनि कर्णनेत्र-
ज्ञानं स्फुरत्येव तथापि तत्र ।
निघर्षणादिप्रभवो ऽवबोध-
स्तदर्थसत्याय न केवलाक्षम् ॥ १३ ॥

---

२६ वस्तुनि । २७ लवणादिखण्डे । २८ कर्पूरादेर्नामनि पदार्थे इत्यर्थः । २९ सत्स्वपीन्द्रियेषु इन्द्रियज्ञानात् निघर्षणच्छेदनतापताडनोत्थपरीक्षाभवं यत् ज्ञानं तदेव स्वर्णादिसत्यतासम्पादकं स्यात् न । हि स्वर्णशब्दे श्रुते चक्षुर्भ्यां स्वर्णवर्णे च दृष्टे स्वर्णं सत्यमिति वक्तुं शक्यते किन्तु निघर्षणादिभवेन तच्चक्रपपट्टलोहाग्न्यादिहेतुजं तत्संयोगानन्तरमेव तत्रेन्द्रियगोचरप्रवृत्तिर्न स्वतस्तत्मागत्रेति विचार्यम् ।

[३०]माणिक्यमुख्येषु पदार्थराशिषु
समाक्षविद्[३१]रत्नपरीक्षिकातः ।
तथापि तेषामधिकोन[३२]वक्रयो
निगद्यते रत्नपरीक्षकैः किम् ॥ १४ ॥

सर्वेषु सर्वाणि समानि खानि
तदा कथं भिन्नविभिन्नवक्रयः ।
परन्तु कश्चित्प्रतिभाविशेषो
येनोच्यते त[३३]द्गतमूल्यनिश्चयः ॥ १५ ॥

तथाहिफेनादिकजोटकेषु
प्रायो विमुह्यन्ति समेन्द्रियाणि ।
प्रमाणमेतेषु तदुत्थमत्तता
तेनेन्द्रियज्ञानम[३४]ृतं न सर्वम् ॥ १६ ॥

तथौषधीमन्त्र[३५]गुडाविशेषै
र्लो[३६]काञ्जनैर्गुप्तनोर्नरस्य ।
[३७]मूर्त्तिस्तु नो दृक्पथमेति नृणां

३० माणिक्यमुख्येषु रत्नपरीक्षावेदिनां यद्यपि पञ्चेन्द्रियाणामपि विषयो वर्तते तथापि रत्नपरीक्षकैः सर्वेन्द्रियाकारसाम्येऽपि न्यूनमधिकं वा मूल्यं तत्र केनायं विशेषः क्रियते एतदवाह । ३१ रत्नपरीक्षिका रत्नपरीक्षाशास्त्रं तस्याः सकाशात् । ३२ मूल्यं । ३३ माणिक्य । ३४ सत्यं । ३५ गुटिका । ३६ अदर्शीकरणाञ्जनेन । ३७ शरीरं ।

वनीरुहागोपतिभूधराद्याः ।
संयोगजाः सन्ति वियोगतश्च
शब्दा अनेके विबुधैर्विवेच्याः ॥ १० ॥

श्रोत्राक्षिमुख्येन्द्रियरूपग्राह्ये[२६]
परन्त्वतन्नामनि[२७] तस्य[२८] नाम्नि ।
अर्थे तथान्याश्रितरूपवेषके
ज्ञानं न नेत्रश्रवसोस्तदर्थकृत् ॥ ११ ॥

यथा सिताभ्रादिसुगन्धिवस्तुषु
श्रोत्राक्षिनासारसनासमुत्थं ।
ज्ञानं यदप्यस्ति तथापि केषुचि-
त्तेषु प्रमाणं रसनावबोधनम् ॥ १२ ॥

स्वर्णादिके[२९] वस्तुनि कर्णनेत्र-
ज्ञानं स्फुरत्येव तथापि तत्र ।
निघर्षणादिप्रभवोऽवबोध-
स्तदर्थसत्याय न केवलाक्षम् ॥ १३ ॥

---

२६ वस्तुनि । २७ लवणादिखण्डे । २८ कर्पूरादेर्नामनि पदार्थे इत्यर्थः । २९ सत्स्वपीन्द्रियेषु इन्द्रियज्ञानात् निघर्षणच्छेदनतापताडनोत्थपरीक्षाभवं यत् ज्ञानं तदेव स्वर्णादिसत्यतासम्पादकं स्यात् न हि स्वर्णशब्दे श्रुते चक्षुर्भ्यां स्वर्णवर्णे च दृष्टे स्वर्णं सत्यमिति वक्तुं शक्यते किन्तु निघर्षणादिभवेन तच्चक्षुषपट्टलोहाग्न्यादिहेतुजं तत्संयोगानन्तरमेव तत्रेन्द्रियगोचरमवृत्तिर्न स्वतस्तत्सागेत्रेति विचार्यम् ।

[३०]माणिक्यमुख्येषु पदार्थराशिषु
समाक्षविद्रत्न[३१]परीक्षिकातः ।
तथापि तेषामधिकोन[३२]वैक्रयो
निगद्यते रत्नपरीक्षकैः किम् ॥ १४ ॥
सर्वेषु सर्वाणि समानि खानि
तदा कथं भिन्नविभिन्नवक्रयः ।
परन्तु कश्चित्प्रतिभाविशेषो
येनोच्यते [३३]तद्गतमूल्यनिश्चयः ॥ १५ ॥
तथाहिफेनादिकजोटकेषु
प्रायो विमुह्यन्ति समेन्द्रियाणि ।
प्रमाणमेतेषु तदुत्थमत्तता
तेनेन्द्रियज्ञान[३४]मृतं न सर्वम् ॥ १६ ॥
तथौषधीमन्त्र[३५]गुडाविशेषे
[३६]लोकाञ्जनैर्गुप्ततनोर्नरस्य ।
[३७]मूर्त्तिस्तु नो दृक्पथमेति नृणां

---

३० माणिक्यमुख्येषु रत्नपरीक्षावेदिनां यद्यपि पञ्चेन्द्रियाणामपि विषयो वर्तते तथापि रत्नपरीक्षकैः सर्वेन्द्रियाकारसाम्येऽपि न्यूनमधिकं वा मूल्यं तत्र केनायं विशेषः क्रियते एतद्वाह । ३१ रत्नपरीक्षिका रत्नपरीक्षाशास्त्रं तस्याः सकाशात् । ३२ मूल्यं । ३३ माणिक्य । ३४ सत्यं । ३५ गुटिका । ३६ अदर्शीकरणाञ्जनेन । ३७ शरीरं ।

तत्किं स[38] नास्तीति न गृह्यते खेः ॥ १७ ॥

तदा[39]श्रितार्थादिकृतेस्तु तस्य
सत्ता तथा शक्तिमहेश्वरीरा. ।
भूतं सती जाङ्गुलिका सपत्नी
सिद्धायिकादेरपि तद्वदेव ॥ १८ ॥

एतस्य सिद्धौ हि परोक्षसिद्धिः
तत्सेधनात् स्वर्गपरे[40]तसिद्धिः ।
न[41] दृश्यते यन्ननु चेष्टयापि
कथं हि तद्वस्तु सदिष्यते भोः ॥ १९ ॥

स्थाने परं सर्वमिदं हि केवली
ज्ञानेन जानाति यदेव वस्तु सत् ।
अतस्तदीयं वचनं प्रमाणं
यदुच्यते तेन परावबुध्यै ॥ २० ॥

त्वं पश्य लोकेऽपि जनैर्न चान्यै-
र्यज्ज्ञायते तत्किल दृश्यतेऽलम्
नैमित्तिकैरेव यथोप[42]रागो
ग्रहोदयो गर्भ[43]घनागमादि ॥ २१ ॥

---

३८ गुप्ततनुः । ३९ तस्याश्रितं यत्कार्यं आनयनमोचनादिकं तस्य करणात् । ४० नरक । ४१ नास्तिकः पुनः प्राह । ४२ ग्रहणं ४३ मेघवृष्ट्यादि ।

तथा व्यतीतं सकलं ब्रवीति
पृष्टं तु चूडामणिशास्त्रवेदी ।
निदानवेद्यो ऽखिलरोगनिदानं
निवेदयत्याशु न चान्यलोकः ॥ २२ ॥

परीक्षको वेत्त्यथ नाणकस्य
यथा परीक्षां न परो मनुष्यः ।
पदं पदज्ञः शकुनं च तज्ज्ञो
यथा विजानाति परो न तद्वत् ॥ २३ ॥

अतस्त्वमेकं विद्धि जनो ऽखिलो ऽन्यः
सर्वेन्द्रियो ऽप्यत्र न वेत्ति तद्वत् ।
यथैव नैमित्तिकमुख्यलोक-
स्तदीक्षतः को ऽप्यपरो ऽस्ति वोऽर्थः ॥ २४ ॥

एवं परोक्षार्थमिमं समस्तं
ज्ञानी विजानाति न सर्वलोकः ।
प्रायस्त्विदं वेत्ति परोपदेशा-
ज्जनः स्वतो नेन्द्रियकेषु सत्सु ॥ २५ ॥

आचारशिक्षागमसाधनानि
रसायनं व्याकरणादिविद्याः ।

---

४४ त्वं । ४५ इन्द्रियेभ्यः । ४६ ज्ञानम् । ४७ मन्त्राम्नाय ।
४८ देशान्- ।

चरित्रवृत्ती परदेशवार्त्ता
स्वादिन्द्रियाद्वेत्ति न किन्तु चान्यतः ॥ २६ ॥
हेतोरतः सुष्टु विधाय चित्तं
विचारयेदं स्वविकल्पमुक्तः ।
ग्राह्यं यदेवास्ति नृणां निजैः स्वै-
स्तदेव गृह्णन्ति हि तानि खानि ॥ २७ ॥
ज्ञानं परोक्षं हि यदिन्द्रियाणां
तज्ज्ञायते मङ्क्षु परोपदेशात् ।
शस्तं तथाऽशस्तमिदं समस्तं
विस्तारसंक्षेपत ईक्ष्यते ऽन्यतः ॥ २८ ॥
यथान्त्र[४९]शुक्रं कफपित्तवात-
नाडीभ्रमं गुल्मयकृन्मलाशयाः ।
गण्डोलतापाधिकतसिवालका:
कपालरोगा गलरोगविद्रधी ॥ २९ ॥
इत्यादिकं यत्तनुमध्यवस्तु
सामान्यमर्त्यैर्निजकेन्द्रियैः स्वयम् ।
न ज्ञायते किन्तु परोक्षश्रुत्या
ज्ञेयं तदस्य प्रशमात्स्वसत्ता ॥ ३० ॥

---

४९ अन्त्राश्रितं ह्रानिवृद्ध्यादिकं । वीर्याश्रितं ह्रानिवृद्ध्यादिकं । ५० अप्यन्त्रादिविद्रधिपर्यन्तरोगगणस्य औषधादिनोपशमात् शान्तितः सत्ता रोगोत्पत्तिज्ञानं भवेत् ।

इदं [५१]विदां सुन्दर स त्वमेदं-
पर्य्यं विजानीहि मयोच्यमानम् ।
वस्त्वस्ति यत्प्राणि[५२]भृदङ्गभाग-
भूतं प्रदृश्यं न परन्त्वमूर्त्तम् ॥ ३१ ॥
अतः किलाकारवतोऽङ्गिनोऽङ्गजं
तदङ्गभूतं च यदस्ति वस्तु ।
दृश्यं तदेवाथ न सन्त्यनाकृते-
र्जीवस्य येनाकृतयो गुणास्ते ॥ ३२ ॥
इतीयता सिद्धमिदं यदत्र खै-
र्ग्राह्यं तदेव प्रतिगृह्यते तैः ।
अन्यद्यदासैरुदितं तदेव
सत्यं नृणां खानि तु सर्वदृंशि नो ॥ ३३ ॥

इति जैनतत्त्वसारे जीवकर्मविचारे सुरचन्द्रमनः स्थिरीकारे
नास्तिकस्य प्रत्यक्षप्रमाणात्तोऽइन्द्रियावगमाधिक्योक्तिलेशः
चतुर्दशोऽधिकारः

---

५१ विदः पण्डिताः तेषां मध्ये सुन्दर । ५२ जीवशरीरभाग-
जातं वस्तु

# अथ पञ्चदशोऽधिकारः

पुनश्च यद्देहबहिःस्थवस्तु
दृश्यं तदेवाङ्गिभिरीक्ष्यतेऽक्षैः ।
ग्राह्यं तु यन्नास्ति न गृह्यते तत्
परोक्तिशक्त्या तदपीह मन्यते ॥ १ ॥

पुंसो यथा कस्यचिदस्ति कन्धरा[५३]
पृष्ठस्थितो वंशकमध्यगो वा ।
भृङ्गोऽथवा लक्ष्म[५४] च कालकादि[५५]
स्वयं न जानाति स तन्निजैः खैः ॥ २ ॥

यदा तु मात्रादिनिजाप्तवृद्धै-
स्तवात्र भृङ्गादि निगद्यतेऽदः ।
तदापि तेनाप्यनुमन्यते तत्
परन्तु खैः स्वैर्न कदाचिदीक्ष्यम् ॥ ३ ॥

विद्वन् यथास्येक्षकमानवास्ततो
ऽनेके परे सन्ति तथा स्वै[५६]रीक्षकाः ।
घना न तस्य त्वनिरीक्षकः स्वको
ऽद्वयेवैककस्तेन समं न चोत्तरम् ॥ ४ ॥

युक्तं परं नास्तिकतो घना जनाः

---

५३ ग्रीवा । ५४ स्वस्तिकादि । ५५ तिलकादि । ५६ स्वर्गे

सन्त्यास्तिका आप्तवचःप्रमाणकाः
तत्प्रेत्य[57]दर्शा निवसन्ति भूरिशो
[58]लक्ष्मेक्षवन्नास्तिकवत्तु लक्ष्मवान् ॥ ५ ॥

सत्यं मुने तत्फलतोऽपि पृष्ठगं
लक्ष्मावसेयं हि भवेदवश्यम् ।
परन्तु न स्वर्गपरेतलोकौ
कयापि बोध्यो ननु चेष्टयापि ॥ ६ ॥

मैवं वदः कोविद शक्तिशम्भु-
गणेशवीरादिकदेवसंहतिः ।
शैवाङ्गिमान्याथ तुरुष्कपूज्याः
फिरस्तपेगम्बरपीरमुख्याः ॥ ७ ॥

तदीयसेवोत्थिततादृशेन
फलेन वेद्या न हि सन्ति ते किम् ।
सन्तीति चेत्ते त्रिदशा न मर्त्याः
प्रायो न दृश्याः कलिकालयोगतः ॥ ८ ॥

दूरस्थतद्योग्यनिवासभूमे-
रगम्यतत्क्षेत्रपथा मनुष्याः ।

---

५७ परभव । ५८ लक्ष्मेक्षा इव लक्ष्मेक्षवत् लक्ष्यदर्शका इव । यथा लक्ष्मवान् अङ्की स्वाङ्कस्थमपि लक्ष्म न पश्यति तथा नास्तिकोऽपि स्वर्गादि न पश्यति इति समानमुत्तरम् ।

परन्तु सिद्धास्त्विदमीय[५९] सत्ता
नो मादृशैरत्रगतैः प्रदृश्या ॥ ९ ॥
त्वं चेतसि स्वे परिभावयैवं
लङ्कास्ति वा नो ननु वर्तते सा ।
त्वया मया सर्वजनैरपीय-
माकर्ण्यते केन न मन्यते सा ॥ १० ॥
एवं तदा चेत्त्वमिह स्थितः सन्
लङ्कां पुरीं तां मम दर्शयात्र ।
श्रुत्वेति सोऽभाषत नास्तिकाख्य
इहस्थितैः कैर्ननु दृश्यते सा ॥ ११ ॥
त्वमित्थमेवात्मनि मानयात्र
स्थितैस्तु लङ्का न यथा निरीक्ष्यते ।
न स्वर्गमोक्षादिपदं तथैव
छद्मस्थपुम्भिः परिवीक्ष्यमत्रंगैः[६०] ॥ १२ ॥

इति जैनतत्त्वसारे जीवकर्मविचारे सूरचन्द्रमनःस्थिरीकारे नास्तिकस्य सकलमत्यक्षेऽपि कस्मिंश्चिद्वस्तुनि निजमत्यक्षता-निराकरणोक्तिलेशः पञ्चदशोऽधिकारः ॥

---

५९. एषामियमिदमीया सा चासौ सत्ता च तथा देवसम्बन्धिनी सत्ता एतत्सिद्धौ हि सिद्धा एतद्विपरीतपापहेतुमाप्या नरकगतिसत्तेति स्वयमूह्या । ६० अत्रास्थितैः ।

# अथ षोडशोऽधिकारः

अथास्तिकं नास्तिक आह शस्तधी-
रस्त्वस्त्विदं स्वर्गपदादि निश्चितम् ।
परं किलैतस्य यदस्ति साधनं
तद् ब्रूहि मे साम्प्रतमादरेण ॥ १ ॥
अहो त्वया साधु वचः समीरितं
धर्मश्रुतौ ते यदभूदिदं मनः ।
[61]एकाग्रचेतः शृणु तर्हि मद्वचो
यथा तवाप्यस्तु [62]सुधीः सुधर्मे ॥ २ ॥
हिंसामृषादत्त[63]ब्रह्माङ्गनागमाः
परिग्रहश्चेति समे समन्ततः ।
विवर्जनीया यदिमान् विवर्ज्य
सिद्धोऽभवच्छ्रीभगवान् प्रसिद्धः ॥ ३ ॥
ये [64]सत्यशीलक्षमतोपकारिता-

---

६१ यथा स्यात्तथा । ६२ शोभना बुद्धिः । ६३ आदान ।
६४ पुनस्त्वं पश्य संसारे वसतां योगिनां ये सत्यशीलादयः लौकिका गुणा अलसोऽल्पशोऽभूवन् ते सर्वेऽपि गुणा योजभूताः सन्तः एषां योगिनां निरन्तरेनायमनीर्णानापन्नाः सिद्धावस्थायपोग्याः एते भवन्तीति तदुक्तकवेर्हृद्गतम् ।

सन्तोषनिर्दूषणवीतरागताः ।
निःसङ्गता चाप्रतिबद्धचारिता-
सज्ज्ञानितानिर्विकृतिप्रसन्नताः ॥ ४ ॥
सद्बोधितानिश्चलताप्रकाशिता-
अस्वामिसेवित्वमतीवसत्त्वताः[६५] ।
निर्भीकताल्पाशनताविशिष्टता-
संसारसम्बन्धजुगुप्सतादयः ॥ ५ ॥
अत्रेदृशा[६६] अल्पगुणा अभूवन्
सिद्धिश्रितां[६७] ते तु भवन्त्यनन्ताः ।
क्षेत्रस्वाभावादथ सिद्धभावा-
द्यद्वा शिवात्केवलिवाक्प्रमाणात् ॥ ६ ॥
विशेषकम् ॥

तत्सेवकेनापि तदीयशील-
विधायिना भाव्यमिति प्रतीतम्[६८] ।
तथा[६९] च सिद्धा यदमूर्त्तरूपा

---

६५ संसारसम्बन्धेनायं मम स्वामी अहं चास्य सेवी सेवकः तर्हि मया किञ्चित्कर्मकरेण इव भाव्यमिति भावाभावः सम्बन्धमनुभवत्येव । ६६ अर्थात् मुमुक्षुषु । ६७ सिद्धिं गतानां मुमुक्षूणां । ६८ लोके । ६९ मया सिद्धाः स्मर्त्तव्या यथाहमप्येतादृशोऽपुनर्भावो भवामीति विचिन्त्य सिद्धान्स्वामित्वेन सम्पाद्य स्वमात्मानं च तत्सेवकतया प्रकल्प्य यदि तत्सेवामाचरति तदेदृशेन तेन भाव्यमित्याह ।

[70]गताशना [71]नीरुषवीतरागाः ॥ ७ ॥
निरञ्जना [72]निष्क्रियका गतस्पृहाः
अस्पर्धका [73]बन्धनसन्धिवर्जिताः ।
सत्केवलज्ञाननिधानवन्धुरा
निरन्तरानन्दसुधारसा[74]र्चिताः ॥ ८ ॥

अतस्तदुत्पन्नगुणानुगामिभि-
[75]र्महानुभावैर्मुनिभिर्विधीयते ।
तेषां गुणानाम[76]नुयानमात्मा-
नुरूपशक्त्या [77]तदवाप्तिकाङ्क्षया ॥ ९ ॥

यद्यप्यमीषां न गुणान्समस्तान्
पूर्णानिमे सेवितुमत्र शक्ताः ।
तथाप्यमी साधव आत्मयोग्यं
श्रित्वा बलं सिद्धगुणान् श्रयन्ति ॥ १० ॥

[78]तथाहि सिद्धाः परिभान्त्यमूर्त्ता

---

७० निराहाराः । ७१ गतद्वेषाः । ७२ गतारम्भाः । ७३ बन्धनं मानसं वाचिकं कायिकं च यथा इदं नाहं करिष्ये इति त्रिकरणेनापि मुक्ताः सन्धानं सन्धिः अमानन्दशीलानां भवद्भिरिदं मान्यः इति सन्धिः संश्लेषः सोऽपि त्रिकरणाश्रितस्तेन मुक्ताः । ७४ पूर्णाः । ७५ साधुभिः । ७६ अनुसरण । ७७ सिद्धत्व । ७८ किं किं विचिन्त्य सिद्धगुणाननुसरन्तीत्याह ।

[७९]अमी तथा देहममत्वमुक्ताः ।
अरूपिणस्ते तदिमे शरीर-
संस्कारसत्कारनि[८०]राकारकाराः ॥ ११ ॥
मुक्ताशनास्ते ऽत इमे क्व[८१]चित्कचि-
दाहारवर्जाः पुनरेव ते तु ।
विद्वेषमुक्ता इति सर्वसत्त्व-
मैत्रीवहा एत इतीव रुच्याः ॥ १२ ॥
ते वीतरागा इति बन्धुबन्ध-
च्युता इमे ते तु निरञ्जनाख्याः ।
इमे ततः प्रीतिविलेपनाद्यैः
शून्याश्च ते निष्क्रियकास्ततोऽमी ॥ १३ ॥
आरम्भसंरम्भवि[८२]लम्भरिक्ता
गतस्पृहास्ते ऽत इमे निराशाः ।
अस्पर्धकास्ते तदमी परैस्तु
वादैर्विवादैरहितास्तथा च ॥ १४ ॥
निर्बन्धनास्ते ऽथ सदैवकृप्त-

---

७९ अत्र प्रकरणे इदमदस्एतच्छब्दैः साधव एव सर्वत्र ग्राह्या-स्तच्छब्देन तु प्रसिद्धास्ते सिद्धा एवादेयाः किं वारंवारं लिखनेन । ८० निषेधकर्त्तारः । ८१ पर्वणि । ८२ विशेषेण लम्भः प्राप्तिस्तया रिक्ताः शून्याः ।

स्वेच्छाविहारास्तदिमेऽथ तेऽपि ।
निःसन्धयो ऽमी तु परस्परोत्थ-
सख्यादिरक्ता अथ केवलेक्षाः ॥ १५ ॥
ते सन्त्यमी सर्वजगत्स्वभावा-
नित्यत्वदर्शाः पुनरेव ते तु ।
आनन्दपूर्णास्तदिमे सदान्तराः
सन्तोषपोषात्समभावभाविनः ॥ १६ ॥
इत्यादिका ये भगवद्गुणौघाः
शास्त्रेषु दृष्टा अथ तान्प्रकल्प्य ।
मुमुक्षवो ऽमी अपि शक्तियोग्य-
माहत्य सिद्ध्यन्त्यपि ते क्रमेण ॥ १७ ॥
ये ऽन्ये गृहस्थाः खलु ते स्वकीय-
शक्त्या तथा देशत एतकान् गुणान् ।
दुष्कर्मशान्त्यर्थमनुश्रयन्तः
क्रमेण चैतेऽपि सुखीभवन्ति ॥ १८ ॥
एवं तु ये के ऽपि जनाः स्वशर्मणे
मत्तां श्रिताः श्रीपरमेश्वरस्य ।

८३ मैत्र्यान् । ८४ अनगाराः ८५ यथा सिद्धापेक्षया साधुषु देशतो गुणाः साध्वपेक्षया गृहस्थेषु देशतो गुणाः तत एतान् तपः-प्रभृतिकान् गुणान् । ८६ [illegible] । ८७ मते । ८८ परमेश्वरेऽर्पितानि [illegible] मुक्तिरिति ये परमेश्वरस्य मतानं

तत्प्रीतये[८९] ते ऽपि गुणानिमान-
नुयान्ति विज्ञाः परब्रह्मलिप्सवः ॥ १९ ॥
साधो गृहस्था अपि देशतो ऽमी
श्रयन्त्वमूनेव गुणांश्चिराय ।
परन्तु यत्कर्मणि जीवहिंसा
श्रयन्ति चेत्तन्नवरं तदेषाम् ॥ २० ॥
सत्यं गृहस्थाः खलु ते भवन्ति
प्रायो हि ते स्थूलधियोऽतिचिन्ताः[९०] ।
आरम्भवन्तश्च परिग्रहादराः
सूक्ष्मेक्षि[९१]कालोकनकुण्ठ[९२]बुद्धयः ॥ २१ ॥
एते विनालम्बन[९३]मत्र तत्त्व[९४]-
त्रये विमुह्यन्ति ततः शुभार्थम् ।
साकारपूजां धृतसाधुवेष-
सेवां च दानादि सृजन्तु नित्यम् ॥ २२ ॥
उच्चैः कुलाचारयशोऽवना[९५]र्थं
श्रितो गृहस्थैः सकलो[९६] ऽपि धर्मः ।
तद् द्रव्यतो भावत आत्मसम्पदे

---

भजन्ते तेऽपि । ८९ परमेश्वरप्रीतये । ९० अधिकचिन्ताः । ९१ दृष्टि । ९२ बठर । ९३ आलम्बनमाश्रय आधारो वेत्याद्येकार्थाः । ९४ साकारजिनप्रतिमायां साधुवेषे प्रतिलेखनाप्रमार्जनादानादि-कर्त्तव्ये च द्रव्यधर्मत्रये । ९५ रक्षणाय । ९६ द्रव्यभावभिन्नः ।

द्विधापि धर्मं गृहिणः श्रयन्त्वमी ॥ २३ ॥

प्रायेण सावद्यरता गृहस्थाः
सदैहिकार्याधिकृता प्रसक्ताः ।
कुटुम्बपोषाहृतभूरिसङ्ख्यो-
र्नीचर्वार्ताः परतन्त्रखिन्नाः ॥ २४ ॥

तेऽमी स्वचेतःप्रतिभातपुण्य-
कार्योद्यता आत्मरुचिप्रवृत्ताः ।
यदेव ते स्वीयमनोऽभितुष्ट्यै
कुर्वन्ति पुण्यं किल कुर्वतां तत् ॥ २५ ॥

एते गृहस्था हृदये विदध्यु-
रित्येव मङ्गल्य च द्रव्यधर्मम् ।
द्रव्येण कर्माणि समाचरय्य
यथा मनस्तुष्टिमिदं निधत्ते ॥ २६ ॥

तथैव धर्माण्यपि कानिचिच्चेद्
द्रव्येण कृत्वा स्वमनः प्रसन्नम् ।
कुर्मोऽत्र येनैव गृहस्थसत्को
व्यापार एष द्रविणेन सिध्येत् ॥ २७ ॥

एषां यतो द्रव्यवतां स्वधर्मं

---

९७ भार्याश्रिताः । ९८ पारवश्येन खेदयन्तः । ९९ मानित
१०० पुण्यादि

द्रव्येण सार्द्धं भवतीह चेतः ।
युक्तं ह्यदो यस्य बलं यदीयं
बलेन तेनैव मतं निजं क्रियात् ॥ २८ ॥
तद्द्रव्यधर्मं गृहिणां प्रकुर्वतां
संसारकार्यान्मनसोऽस्तु संवृतिः
यथा तथैते दधतां मनः स्वकं
सालम्बने पुण्यविधावपेक्षणम् ॥ २९ ॥
तद्यावतामी निजकेन्द्रियाणि
संवृत्य संसारभव[1]क्रियातः ।
तदेव पूजादिकमाश्रयन्तां
मनः स्थिरं येन मनागपि स्यात् ॥ ३० ॥
यावत्त्वनाकार[2]पदार्थचिन्ता–
कृतौ मनो न क्षममस्ति तद्वत्[3] ।
सुसाध्वसाधुप्रतिपत्तियोग्यो
ज्ञानोदयो यावदहो भवेन्नो ॥ ३१ ॥
तावत्स्वकीयव्यवहाररक्षा
कार्या कुलीनेन सनिश्चयेन ।
[4]सनिश्चयः सव्यवहार एवं

१ सम्बन्धि २ सिद्धे ध्यानं अर्हमित्याद्यक्षरं वा ३ तथा ४ कथम्भूतो गृहस्थः सनिश्चयः निश्चयनयध्यायी पुनः कीदृग् सव्यवहारः व्यवहारनयकर्त्ताऽत्रायंभावः गृहस्थे[illegible] [illegible]ं कुर्वतापि एवं

निन्द्यो गृहस्थो न परैर्यतो भवेत् ॥ ३२ ॥

स्थिरं यदा चित्तमनाकुलावपि
तदा तु सिद्धस्मरणं विधेयम् ।
तत्सेधने साधुगृहस्थमुख्ये-
रात्मावबोधे परियत्न एष्यः ॥ ३३ ॥

पौर्वो विधिर्योऽखिलद्रव्यभाव-
भिन्नः स हि धीरधरोपलब्ध्यै ।
निर्वाणधाम्नो वरयानवत्स्या-
त्तस्य प्रवेशेऽयमिहात्मबोधः ॥ ३४ ॥

तदङ्गने पादविहारवद्यः
शिवालयावस्थितिकृन्महात्मनां ।
तेनात्मबोधः परमोऽस्ति धर्मो
यत्सेधनान्निर्वृतिरेव निश्चिता ॥ ३५ ॥

---

निश्चयपरेणा स्थेयं मया नायं सर्वो व्यवहारः साध्यते परं यदा भाव-
धर्म उदयं समेष्यति ध्रुवं मोक्षो भावी नान्यथा इति निश्चयपरेण
भाव्यं येन व्यवहारावसरं व्यवहारं कुर्वन् निश्चयावसरेऽवसरं च
निश्चयं कुर्वन् कुलीनो गृहस्थः न निन्द्यो भवेत् अस्यायं भावः उत्तमेन
कुलीनगृहस्थेन येन पुण्यकर्मणा पुण्यवज्जनेषु पूज्यैः यशोऽर्जितं
तद्विपरीतं पापं कृत्वाऽयशो नार्जनीयमिति व्यवहारतः व्यवहारिणा
प्रायो गृहस्थेन सता मुनिधर्मं स्वीकर्तुं गुणाः क्वापि न निन्द्यो
भवतीति तत्कर्म परेणाधिकाभ्यासेन सर्वं विचार्यम् । ५. भू. ।

सन्त्यत्र[6] यद्बोधनदर्शनाख्य-
चारित्रमुख्याः सकला गुणौघाः ।
स आत्मबोधो जयति प्रकृष्टं
ज्ञानादिशुद्धं[7] यदिहास्त्यनन्तम् ॥ ३६ ॥

तच्छोधने[8]ऽनन्तचतुष्टयाप्ति-
र्यदीयपारप्रतिपत्तिकार्ये ।
ज्ञानं न कस्यापि सदा प्रभु स्या-
त्सर्वात्मनाकाशदृशीव[9] शाश्वतम् ॥ ३७ ॥

इति जैनतत्त्वसारे जीवकर्मविचारे सूरचन्द्रमनःस्थिरीकारे नास्तिकस्य द्रव्यभावभेदाद्द्विविधधर्मदर्शनपूर्वकं द्रव्यधर्मादपि परम्परया भावधर्मलाभोक्तिलेशः षोडशोऽधिकारः ।

---

६ आत्मावबोधे ७ ज्ञान ८ आत्मावबोधस्य सम्यग् निर्मलतायां ९ आकाशदर्शने इव ।

# ॥ अथ सप्तदशोऽधिकारः ॥

अथेत्यमौ नास्तिक आख्यदास्तिकं
यदुच्यते भोः प्रतिमार्चनाद्भवेत् ।
पुण्यं न तत्सम्भवतीपदार्था
अजीवतः का फलसिद्धिरस्ति ॥ १ ॥
नैवं स्वचित्ते परिचिन्तनीय-
मजीवमेवाकरणाद्भवेत्किम् ।
यद्यादृशाकारनिरीक्षणं स्या-
त्प्रायो मनस्तद्गतधर्मचिन्ति ॥ २ ॥
यथा हि सम्पूर्णशुभाङ्गपुत्रिका
दृष्टा सती तादृशमोहहेतुः ।
कामासनस्थापनतश्च काम-
केलीविकारान्कल्पयन्ति कामिनः ॥ ३ ॥
योगासनालोकनतो हि योगिनां
योगासनाभ्यासमतिः परिध्यान् ।
भूगोलतत्त्वद्गगनवस्तुबुद्धिः
स्याल्लोकनालेरिह लोकसंस्थितिः ॥ ४ ॥

---

१० ध्यान ।

[११] कूर्माहिकालानलकोटचक्रै-
स्तदाश्रितज्ञैरिह स्थितानाम् ।
शास्त्रीयवर्णन्यसनात्समग्र-
शास्त्रावबोधस्तद[१२]भीक्षकाणाम् ॥ ५ ॥
नन्दीश्वरद्वीपपुटात्तथा च
लङ्कापुटात्तद्गतवस्तुचिन्ता ।
एवं निजेशप्रतिमापि दृष्टा
तत्तद्गुणानां स्मृतिकारणं स्यात् ॥ ६ ॥
यदा तु साक्षान्न हि वस्तु दृश्यं
तत्स्थापना सम्प्रति लोकसिद्धा ।
तथा च पत्यौ परदेशसंस्थे
काचित्सती पश्यति यत्तद[१३]र्चाम् ॥ ७ ॥
यदन्यशा[१४]स्त्रेऽपि निशम्यतेऽदः
श्रीरामचन्द्रे परदेशसंस्थे ।
तत्पादुकां सोऽपि च रामवत्तदा-
भ्यपूजयच्छ्रीभरतो नरेश्वरः ॥ ८ ॥
सीतापि रामाङ्गुलिमुद्रिकां ता-
मालिङ्ग्य रामाप्तिसुखं न्यमंस्त ।

---

११ कूर्मचक्रं अहिचक्रं अहिवलयाख्यं वा चक्रं सूर्यकालानलचक्रं चन्द्रकालानलचक्रं कोटचक्रं वेति वाच्यम् । १२ तदभिदर्शकानाम् । १३ तस्य पत्युः अर्चा प्रतिमाम् । १४ रामायणादावपि ।

रामोऽपि सीताश्रितमौलिरत्न-
मासाद्य सीतामिलितं व्यजानात् ॥ ९ ॥
नात्रास्ति कश्चित्तु तयोः शरीर-
कारस्तथापीह तयोस्तथाविधम् ।
सुखं समायाद्यदजीवतोऽपि
तर्हीश्वरार्चापि सुखाय किं न ॥ १० ॥
इत्थं चरित्रेऽस्ति च पाण्डवानां
यद्द्रोणसूरिप्रतिमापुरस्तात् ।
भिल्लैकलव्यस्य किरीटिवद्धनु-
र्विद्या सुसिद्धेति जगत्प्रतीतम् ॥ ११ ॥
तथा च चन्द्र्यादिकवस्त्वजीवं
क्षेत्रादिरक्षाकरणे समर्थम् ।
छायाप्यशोकस्य च शोकहर्त्री
कल्पस्तु मौ स्यात्कल्पदाय नृणाम् ॥ १२ ॥
अजारजोमुख्यमथाप्यजीवं
पुण्यादिहान्यै भवतीति लोकः ।
अस्पृश्यकन्यायमजीवमेवं
सन्दृश्यमानस्य निहन्ति पुण्यम् ॥ १३ ॥
गुर्वीवचन्द्राननपीह योगिनः

१५ स्वर्णपूर्णानपि । १६ व्याधः । १७ अर्जुन । १८ छाया ।
१९ कल्याणमित्रता दाता ।

प्रोल्लङ्घमानस्य निहन्ति पौरुषम् ।
महेश्वरच्छायमथापि तस्य
रुषे व्यतिक्राम्यत एव पुम्सः ॥ १४ ॥
एवं पदार्था बहवोऽप्यजीवाः
सुखस्य दुःखस्य च हेतवः स्युः ।
देवाधिदेवप्रतिमाप्यजीवा
सती न किं सा सुखहेतुरत्र ॥ १५ ॥
वरं निजेशप्रतिमापि तर्हि
दृष्टा सती भक्ततमांसि हन्तु ।
परन्तु याऽस्याः क्रियते सपर्या
साऽजीवतः कस्य च किंफला स्यात् ॥ १६ ॥
नैवं त्वजीवापि सतीश्वरार्चा
समर्चिता पुण्यफलाय नूनम् ।
त्वं विद्धि चित्ते प्रतिमा यदीया
या या सका स्वोत्थगुणप्रदा स्यात् ॥ १७ ॥
यथा ग्रहाणां प्रतिमा अजीवाः

---

२० महेश्वरो महानायकः सार्वभौमादिस्तस्य छाया तत्तथा त्रि-भाषा सेनासुराछायाशालानिशानामिति क्लीवता एवमग्रेपि वाच्यम् । २१ महेश्वरस्य । २२ उल्लङ्घमानस्य । २३ स्वर्णरूप्यरत्नवस्त्रकम्बल सिद्धान्नपानौषधादिपदार्था अनेके सन्ति । २४ अजीवत्वहेतोः । २५ देवप्रतिमा ।

सत्योऽपि तत्पूजनतस्तदीयम् ।
गुणं ददत्येव तथा सतीनां
क्षेत्राधिपानामथ पूर्वजानाम् ॥ १८ ॥
विधेर्मुरारेश्च शिवस्य शक्ते-
र्याः स्थापनास्ता अहिता हिता वा ।
अमानिताश्चाप्यभिमानिताः स्युः
स्तूपं तथा वा फलवन्न किं स्यात् ॥ १९ ॥
रेवन्तनागाधिपपश्चिमेश-
श्रीशीतलादिप्रतिमा अजीवाः ।
संपूजितास्तद्गतकार्यसिद्धिं
कुर्वन्ति येऽत्र तथाऽधिपोऽर्च्या ॥ २० ॥
ये कार्मणाकर्षणवेदिनस्तथा
नाम्नैव येषां मदनादिपुत्रके ।
निर्जीवके तं विधिमाचरन्त्यहो
यस्मात्सजीवानपि मूर्च्छयन्ति तान् ॥ २१ ॥
एवं जिनेशप्रतिमामजीवां
तन्नामग्राहं स्तवनां विधाय ।
समर्चयद्भिः कुशलैः सपर्या
सम्प्रापितो ज्ञानमयः प्रभुः स्यात् ॥ २२ ॥
तथा निर्योऽन्यानपि कांश्चिदात्मनो

२६ पितॄणाम् । २७ यथा । २८ स्वामि– । २९ सेवकान ।

मूर्त्तिं प्रभुर्मानयतोऽवसाय ।
तुष्यत्यसौ तेषु तथैवमीशो
ऽर्चितो भवेत्तत्प्रतिमार्चनात्स्यात् ॥ २३ ॥
सत्यं बुधैतत्परमत्र यस्मा-
द्विशेष एषो ऽभिनिरीक्ष्यते महान् ।
देवा यदेते किल सन्ति रागिणः
पूजार्थिनो नो भगवान्स ईदृशः ॥ २४ ॥
तदात्वतीवास्तु वरं यतः स्या-
दनीहसेवा परमार्थसिद्धये ।
यथाहि सिद्धस्य च कस्यचिद्वा
स्पृहावतः सेवनमिष्टलब्धये ॥ २५ ॥
सिद्धस्तु साधो वरिवर्त्ति साक्षा-
दैशी त्वजीवा प्रतिमा प्रतिष्ठिता ।
नायं विचारः परिपूजनीये
द्रव्ये यतः पूज्यत एव पूज्यः ॥ २६ ॥
यद्दक्षिणावर्तककामकुम्भ-
चिन्तामणिचित्रकवल्लिमुख्याः ।
कानीन्द्रियाणीह वहन्ति यत्ते
ऽर्चिताः प्रकुर्वन्ति मतं जनानाम् ॥ २७ ॥
वस्तुस्वभावाद्यदमी अजीवाः
स्वतोऽस्पृहावन्त इहाङ्गिकामान् ।

यच्छन्ति यथैव खलु पारमेशी
पुण्यस्य सिद्ध्यै प्रतिमार्चिता तथा ॥ २८ ॥
मतं मुने ऽदोऽस्ति परं य एते
स्युर्दक्षिणावर्तमुखाः पदार्थाः ।
अजीववन्तोऽपि विशिष्टजाति-
भेदात्तथादुर्लभवस्तुभावात् ॥ २९ ॥
आराधिता अङ्गिमतं दिशन्ति
नैतादृगर्चा किल पारमेश्वरी ।
अहो यदेषा सुलभोपलादिम-
मयी तदा किं सदृशी त्वमीभिः ॥ ३० ॥
अहो विचारिन्नविचारितं मा
वदस्त्वमेवं जगतीह पश्य ।
यन्मूलतो वस्तु गुणि प्रतीतं
ततोऽपि यत्पश्चकृतं गुणाढ्यम् ॥ ३१ ॥
यथाहि कश्चित्किल राजपुत्रः
प्रायेण वीर्यादिगुणास्पदं स्यात्
तं मोज्झ्य चेद्दुर्वलवंशसम्भवं
पुण्यात्त राज्ये विनिवेशयन्ति ॥ ३२ ॥
प्रामाणिकाः पश्य यदा तदा त्वयं

---

१० यथा । ११ परमेशस्य इदं पारमेशी । १२ प्रमाणिनः ।
१३ दक्षिणावर्तादिभिः ।

राजन्यकं मौलमपि प्रशास्ति ।
यदा तदुक्तं न करोति कश्चि-
त्स शास्यते नन्दवदेव तेन ॥ ३३ ॥[३४]

विचार्यते चेन्मनसा मनुष्यै-
र्मौलो गुणी राजसुतः स योग्यः ।
परन्तु यः क्षुद्रकुलोऽपि राजा
स एव सेव्यः खलु पञ्चपूजितः ॥ ३४ ॥

एवं हि चिन्तामणिमुख्यमेतद्
वस्तु प्रधानं निजकस्वभावात् ।
ततोऽपि मान्यं भुवि पारमेश्वरं
बिम्बं यतः पञ्चभिरत्र पूजितम् ॥ ३५ ॥

लोके यदेवादृतमस्ति पञ्चभिः
तदेव मान्यं क्षितिपैरपि ध्रुवम् ।
यथा विवाहार्थनृपा महाजना
न्यायौऽङ्घ्रिपुत्रावपरेऽपि चेत्थम् ॥ ३६ ॥[३५]

ये पञ्चभिस्तत्कृतभाग्यनोदा-
त्संस्थापिताः सन्ति त एव मान्याः ।
तथा स्वपूजाह्वयकर्मवीर्या-
त्कृतास्ति यैशी प्रतिमा सकैऽर्च्या ॥ ३७ ॥[३६]

---

३४ नन्दनामराजेन(राजा?) इव शिक्षा दाप्यते । ३५ पालक । ३६ सा ।

प्राज्ञा य एते गदिताः पदार्था-
स्ते सर्व आकारयुता भवन्ति ।
अतस्तदीयाकृतिमन्तरात्मनः
कृत्वार्चयन्तेऽत्र तदीयविम्वम् ॥ ३८ ॥
आकारमुक्तो भगवान्प्रसिद्ध-
स्ततस्तदीयं प्रतिविम्बमेतत् ।
कृत्वा कथं पूज्यत एवमत्र
दोषस्त्व[३७]तद्वस्तुनि तद्ग्रहो यः ॥ ३८ ॥
साधूच्यतेऽदस्त्वयका विचारिणा
ऽनाकारिणस्त्वाकृतिरेव नेष्टा ।
इदं तु यद्भागवतं हि विम्बं
तच्चावताराकृतिक्लृप्तरूपम् ॥ ४० ॥
यादृक्तु संसारकृतावतारो
ऽभून्यासि तादृग्भगवान्महद्भिः ।
या या ह्यवस्था रुचिता च येभ्यः
साऽहो तदर्थैः परिपूज्यते तैः ॥ ४१ ॥

इति जैनतत्त्वसारे जीवकर्मविचारे सूरचन्द्रमनःस्थिरीकारे नास्तिकस्याजीवरूपस्थापनासेवाफलप्रतिपादनोक्तिलेशो सप्तदशोऽधिकारः ।

---

३७ अभगवति भगवानयं इति या वुद्धिः ।

राजन्यकं मौलमपि प्रशास्ति ।
यदा तदुक्तं न करोति कश्चि-
त्स शास्यते नन्दवदेव तेन ॥ ३३ ॥[34]

विचार्यते चेन्मनसा मनुष्यै-
र्मौलो गुणी राजसुतः स योग्यः ।
परन्तु यः क्षुद्रकुलोऽपि राजा
स एव सेव्यः खलु पञ्चपूजितः ॥ ३४ ॥

एवं हि चिन्तामणिमुख्यमेतद्
वस्तु प्रधानं निजकस्वभावात् ।
ततोऽपि मान्यं भुवि पारमेश्वरं
बिम्बं यतः पञ्चभिरत्र पूजितम् ॥ ३५ ॥

लोके यदेवादृतमस्ति पञ्चभिः
तदेव मान्यं क्षितिपैरपि ध्रुवम् ।
यथा विवाहार्थनृपा महाजना
न्यायौऽङ्घ्रिपुत्रावपरेऽपि चेत्थम् ॥ ३६ ॥[35]

ये पञ्चभिस्तत्कृतभाग्यनोदा-
त्संस्थापिताः सन्ति त एव मान्याः ।
तथा स्वपूजाह्वयकर्मवीर्या-
त्कृतास्ति येशी प्रतिमा सर्कोऽर्च्या ॥ ३७ ॥[36]

---

३४ नन्दनामराजेन(राजा?) इव शिलां दाप्यते । ३५ पाल्क । ३६ सा ।

तां[45] लङ्घते यः स तदा न साधु-[46]
र्नोल्लङ्घते सैष जनेषु साधुः ।
आम्नायशास्त्रेषु[47] मरुद्यवोः[48] स्यात्
तथाऽऽकृतिर्मण्डलतो[49] विलेख्या ॥ ४ ॥

स्वरोदयस्याथ विचारशास्त्रे
तत्त्वानि[50] पञ्चापि च साकृतीनि ।
अनाकृतं[51] वस्त्विति साकृतं यथा
स्यादित्थमाकार इहाप्यनाकृतेः[53] ॥ ५ ॥

पुनर्बुधेक्षस्व यतीह सन्ति
लोकेषु लोकाः किल लब्धवर्णाः ।
सर्वैश्चतैराकृतिवर्जिता अपि
वर्णाः प्रक्लृप्ताः[54] स्वैकनामसाकृताः[55] ॥ ६ ॥

---

४५ आज्ञां । ४६ भव्य । ४७ आगमशास्त्रे मन्त्रशास्त्रे । ४
मरुद्वायुः द्यौश्च नभः मरुच्च द्यौश्च मरुद्द्यावौ तयोर्मरुद्यवोः वायुनभसो
४९ मण्डलकारणहेतुनाकृतिर्विलेख्या यथा मरुत्मण्डलं चाकाशमण्ड
चेति उक्त्वा तदाकाशे लिख्यते ।५० पृथिव्यप्तेजोवाय्वाकाशलक्षणानि
५१ आकृतिराकृतमाकारः भावे क्तः अनाकृतमनाकारं । ५३ ।सिद्धस्य
५४ रचिताः । ५५ स्वकं यन्नाम तेनैव साकृताः साकारा ये ते स्व
कनामसाकाराः आकारादयो वर्णाः यथायमाकारः अयं ककारः अ
हकारः इति स्वस्वनामग्राहं वर्णाः साकाराः कल्पिताः स्वचित्तकल्प
नया स्थापिता इति ।

# ॥ अथ अष्टादशोऽधिकारः ॥

यद्वा त्वनाकारवतोपि बिम्बं
सिद्धस्य[३८] शुद्धं भगवत्सुनाम्नः ।
तत्तत्स्वचित्ताशयचिन्तिताशां
साक्षादिवेदं[३९] वितरत्वशङ्कम् ॥ १ ॥

यत्स्थापना सा स्वकचित्तकल्प्या
सतोऽसतो[४०] वास्त्विह वस्तुनः सा ।
सर्वापि यादृग्निजभावसेविता
तादृक्फलं यच्छति नात्र संशयः ॥ २ ॥

लोकेऽप्यनाकारमयस्य वस्तुनः
आकारभावः परिदृश्यते यथा ।
आज्ञास्त्यसौ[४१] भागवतीति[४२] वाचं[४३]-
वाचं तु लेखैः[४४] क्रियते मनुष्यैः ॥ ३ ॥

---

३८ भगवान् इति शोभनं नाम यस्य सिद्धस्य स तथा तस्य यो हि सिद्धो भगवान् इत्युच्यते । ३९ सिद्धवत् । ४० विद्यमानस्य अविद्यमानस्य वा । ४१ आज्ञा स्वयं साक्षादाकाररहिता परं तस्या अपि रेखारूप आकारः कल्प्यते या चाज्ञा सापि अमूर्त्तस्य भगवदादेः स्वामिनः प्रतापस्य सम्बन्धिनी तेन पूर्वं भगवदादिप्रतापोऽमूर्त्तः अमूर्त्तस्याप्यस्यामूर्त्ता आज्ञा अस्या अपि अमूर्त्ताया रेखारूप आकार सद्भिः कल्पितः इत्यर्थः । ४२ स्वामिसम्बन्धिनी । ४३ उक्तोक्ता । ४४ रेखा ।

[४५]तां लङ्घते यः स तदा न [४६]साधु-
र्नोल्लङ्घते सैप जनेषु साधुः ।
[४७]आम्नायशास्त्रेषु [४८]मरुद्यवोः स्यात्
तथाऽऽकृतिर्म[४९]ण्डलतो विलेख्या ॥ ४ ॥

स्वरोदयस्याथ विचारशास्त्रे
[५०]तत्त्वानि पञ्चापि च साकृतीनि ।
[५१]अनाकृतं वस्त्विति साकृतं यथा
स्यादित्थमाकार इहाप्यना[५३]कृतेः ॥ ५ ॥

पुनर्बुधेक्षस्व यतीह सन्ति
लोकेषु लोकाः किल लब्धवर्णाः ।
सर्वैश्चैतराकृतिवर्जिता अपि
वर्णाः [५४]प्रक्लृप्ताः [५५]स्वैकनामसाकृताः ॥ ६ ॥

---

४५ आज्ञां । ४६ भव्य । ४७ आगमशास्त्रे मन्त्रशास्त्रे । ४८ मरुद्वायुः द्यौश्च नभः मरुच्च द्यौश्च मरुद्यावौ तयोर्मरुद्यवोः वायुनभसोः। ४९ मण्डलकारणहेतुनाकृतिर्विलेख्या यथा मरुत्मण्डलं चाकाशमण्डलं चेति उक्त्वा तदाकाशे लिख्यते ।५० पृथिव्यप्तेजोवाय्वाकाशलक्षणानि। ५१ आकृतिराकृतमाकारः भावे क्तः अनाकृतमनाकारं । ५३ ।सिद्धस्य। ५४ रचिताः । ५५ स्वकं यन्नाम तेनैव साकृताः साकारा ये ते स्व-कनामसाकाराः आकारादयो वर्णाः यथायमाकारः अयं ककारः अयं हकारः इति स्वस्वनामग्राहं वर्णाः साकाराः कल्पिताः स्वचित्तकल्प-नया स्थापिता इति ।

[५६] यद्याकृतिः स्यान्नियताक्षराणां
तदा समेषां सदृगाकृतिः स्यात् ।
[५७] सा नास्त्यतो भिन्नकभिन्निकैव
वर्णाकृतिः क्वापि न तत्र तुल्या ॥ ७ ॥

यावन्ति राष्ट्राणि च सन्ति विश्वे
वर्णाकृतिस्तेष्वपरापरैव ।
तद्व्यक्तिकाले तु समोपदेशः
तैः कार्यमप्यत्र विधीयते समम् ॥ ८ ॥

पुनश्च पश्य त्वमिमाः समा लिपी-
र्मिथ्या विधातुं न हि कोऽपि शक्तः
या येषु सिद्धाः किल तैश्च ताभि-
र्नैरैर्लिपिभिः प्रविधीयते फलम् ॥ ९ ॥

लिप्यो विभिन्ना इह यद्यपीमा
व्यक्तिः समैवास्ति तु पाठकाले ।
नृणां तथा कार्यकृतिः समस्ता
ताभिः समाना भवतीत्यवेहि ॥ १० ॥

---

५६ ननु एते वर्णाः महद्भिः स्थापिताः इति कथं प्रतिज्ञायते, उच्यते, यद्येषां वर्णानां नियता शाश्वती एवाकृतिः स्यात्तदा समेषां लोकानां ककारादीनां अक्षराणां सदृशी एवाकृतिः स्यात् । ५७ सा तु सर्वेषां समाकृतिर्नदृश्यते सर्वैरपि स्वमनोभिमतपृथक्पृथगेव लिख्यते अतो हेतोरेव भिन्नभिन्नाकृतिः सर्वेषामपि लिपिकर्मकारिजनानामिति ।

घनं किमाकारविवर्जिताना-
मिहाक्षराणामियमाकृतिः कृता ।
अस्या अपि स्थापनमन्यदन्यत्
कृतं बुधैः स्वस्वसुगुप्तवेदने ॥ ११ ॥

पुनश्च रागा अपि शब्दरूप्या-
दाकारमुक्ताश्च तथापि तद्बुधैः ।
ते रागमालाह्वयपुस्तकेषु
न्यस्ताः किलाकारभृतः समस्ताः ॥ १२ ॥

एवं त्वनाकारवतोऽप्यधीशितु-
राकार एष प्रविकल्प्य सद्भिः ।
यं यं वशं साधु समिष्य पूज्यते
सर्वोऽप्ययं तेषु फलत्यवश्यम् ॥ १३ ॥

यद्वाहि पूजा परमेश्वरेऽत्रा-
लिप्तेऽथ निन्दा न लगेत्समापि ।
ते यादृशे तत्र कृते तु तादृशे
अभ्येत[५८] आत्मानमिमं स्वकीयम् ॥ १४ ॥

कुड्ये यथा वज्रमये नरेण
क्षिप्ता मणिर्वा दृषदप्यथा परा ।
ते द्वे अपि क्षेपकमभ्युपेते[५९]
न जातु यातस्तमतीत्य[६०] कुत्रचित् ॥ १५ ॥

---

५८ आयातः । ५९ गच्छतः । ६० क्षेपकम् ।

कश्चिद्रवेः संमुखमात्मना रजो
ऽथवा सिताभ्रं[61] क्षिपति क्षमास्थः ।
तत्सर्वमस्यैव समेति संमुखं
न याति सूर्यं च तथोच्चखं प्रति ॥ १६ ॥
यद्वा पुनः कश्चन सार्वभौमं
संस्तौति तस्यैव फलाय सं[62] स्यात् ।
निन्देदथेशं यदि कश्चिदङ्गी
स्यात्सैव दुःखी जनतासमक्षम् ॥ १७ ॥
स्तुतेऽधिकं स्यान्नहि सार्वभौमे
विनिन्दितेऽस्मिंस्तु न किञ्चिदूनम् ।
नैवं प्रभौ पूजननिन्दनाभ्या-
माधिक्यहानी स्त इमे तु कर्त्तुः ॥ १८ ॥
यद्वा पुनः कश्चिदपथ्यपथ्या-
हारीह दुःखं च सुखं च भुङ्क्ते ।
न स्तस्तु ते आहृतवस्तुनो यद्
एवं च सिद्धार्चनमात्मगामि ॥ १९ ॥

इति जैनतत्त्वसारे जीवकर्मविचारे सूरचन्द्रमनःस्थिरीकारे
नास्तिकस्यानाकारस्यापि भगवतः स्थापनोक्तिलेशो
ऽष्टादशोऽधिकारः ॥

---

६१ कर्पूरं । ६२ संस्तवः ।

# ॥ अथ एकोनविंशोऽधिकारः ॥

साधो वरं प्रोक्तमिदं परं यथा
चिन्तामणिमुख्यमिहार्चकानाम् ।
सद्यः फलत्येव तथात्र पार-
मेशी फलेन्नो प्रतिमार्चिताऽसौ ॥ १ ॥
सत्यं त्वदुक्तं परमत्र साधो
संस्थाप्य चेतः स्थिरमित्यवेहि ।
यद्वस्तुनो योऽस्ति फलस्य काल-
स्तत्रैव तद्वस्तु फलत्यशङ्कम् ॥ २ ॥
यथाहि गर्भो नवभिस्तु मासैः
पूर्णैर्लभेत् सूतिमिहैव नार्वाक् ।
तथा पुनः काश्चन मन्त्रविद्याः
लक्षेण कोट्याथ फलन्ति जापैः ॥ ३ ॥
वनस्पतिर्वा समये स्वकीये
सर्वः फलत्येष न चात्मशैघ्र्यात् ।
सेवापि राजत्रिदशेश्वरादि-
सम्बन्धिनी वा फलतीह काले ॥ ४ ॥
संसाध्यमानोऽत्र रसोऽपि काले

---

६३ पारदोऽपि ।

सिद्धः फलायास्ति न साध्यमानः ।
तथान्यदेशव्यवहारकर्म
तत्कालपूर्त्तौ फलति प्रकामम् ॥ ५ ॥
तथैव पूजादिकमन्त्रपुण्यं
काले स्व एवास्ति भवान्तराख्ये ।
फलप्रदायीति ततो न दक्षै-
रौत्सुक्यमेष्यं फलदे पदार्थे ॥ ६ ॥
[६४]पुनर्बुधा[६५]ऽवस्य हृदि स्वकीये
पूर्वं प्रणीता य इमे पदार्थाः ।
ते चैहिका ऐहिकदायिनस्तत्
फलन्त्यथात्रैव यतोऽग्रतो न ॥ ७ ॥
मनुष्यसम्बन्धिभवस्य तुच्छ-
कालीनभावादिति तुच्छमेभ्यः ।
प्राप्यं फलं तेन मनुष्यजन्म-
न्यैवात्र नै[६६]भ्योऽस्ति फलं पर[६७]त्र ॥ ८ ॥
इदं सुहृत् पुण्यभवं फलं तु
महत्ततः स्याद्बहुकालभुक्त्यै ।

---

६४ पुनरास्तिकः प्राह । ६५ जानीहि । ६६ दक्षिणावर्तकादिभ्य परत्र फलं न स्यात् अननुगामित्वात्, चर्मचक्षुर्दृश्यमानपदार्थास्तु जीवानामसहगामिनो भवन्ति, परमेश्वरपूजादिसमुत्थं पुण्यफलं अदृष्टत्वात् अदृष्टजीवेन सहगामि भवतीति तत्त्वम् । ६७ परलोके ।

प्रभूतकालस्तु विना भवान्तरं
देवादिसम्बन्धि न वर्तते यतः ॥ ९ ॥
तत्पुण्यलभ्यं फलमेतदस्ति
प्रायोऽन्यजन्मान्तरयात[६८]जन्तोः ।
यद्यत्र जन्मन्युपयाति पुण्य-
फलं तदा मङ्क्षुविनाशमेव ॥ १० ॥
यतो मनुष्यायुरतीव तुच्छं
मानुष्यकं देहमिदं शरारु[६९] ।
तद्भुज्यमानं मरणान्तरागमात्
सन्त्रुट्यतीदं पृथुपुण्यजं फलम् ॥ ११ ॥
सुखान्तरा[७०] दुःखभवो[७१] महीयो[७२]-
दुःखाय यत्स्याददतिभीतिदा मृतिः ।
सा पुण्यजेऽस्मिन्[७३]सति नैव युक्ता
तदन्यजन्मे फलमेतदेति भोः ॥ १२ ॥
अनेकधोत्पन्नमनेकशो यथो-
पभुज्यमानं बहु[७४]कालमात्रम् ।
न क्षीयते पुण्यफलं तदेतत्
प्रायोऽन्यजन्मन्युदयं समेति ॥ १३ ॥

---

६८ प्राप्त । ६९ विनश्वरम् । ७० मध्ये । ७१ उत्पत्तिः । ७२ महत्तर । ७३ फले । ७४ बहुकालमेव स्वार्थे मात्रमत्ययः ।

तथा च किञ्चिदुदुग्र[७५]पुण्यं
साक्षादिहैवार्पयति फलानि ।
यथाहि दिव्ये परिशुद्ध्यति क्षणाद्
यः कश्चिदत्रास्ति जनेषु सूनृती[७६] ॥ १४ ॥
शुद्धाय सिद्धाय च साधवे तथा-
ऽण्वपि[७७] प्रदत्तं सकलार्थसिद्धये ।
स्यादैहिकामुष्मिकसर्वसौख्य-
निबन्धनं बन्धनहृद्भवस्य ॥ १५ ॥
जनेऽपि कस्मैचिदनुत्तराय
क्षत्रादये स्तोकमपि प्रदत्तम् ।
वारे क्वचित्केनचिदेकवेलं
तस्येष्टसिद्ध्यै भवतीह नूनम् ॥ १६ ॥
यावत्त्वयं[७८] जीवति तावदस्य
स राजपुत्रः सकलार्थकारी ।
धनं हि किं दुष्टविपक्षजाता-
न्मृत्यन्तकष्टादपि पा[७९]त्यशङ्कम् ॥ १७ ॥
एवं हि कुत्रावसरे किलैक-
वारं महत्पुण्यमुपार्जितं यैः ।

---

७५ अत्युग्र । ७६ सत्यवादी । ७७ अल्पम् । ७८ अयं राजपुत्रादेर्दाता कश्चिद्वैश्यादिः । ७९ रक्षति । ८० मस्नावादेन राजपुत्रादये दातारं प्रति राजपुत्रादिः ।

तेषां तदत्रापि परत्र लोके
सत्सौख्यसन्तानविधानहेतुः ॥ १८ ॥
पुनस्त्वतीवोग्रतमं यदत्र
पुण्यं च पापं समुपार्जि पुंसा ।
अनेकपुंसामपि भुक्तये त-
च्छालेरिव[1] स्त्रैणयुजश्च चोरवत् ॥ १९ ॥
यथैककः कश्चन राजसेवां
कृत्वा सुखी स्यात्परिवारयुक्तः ।
एकस्तथा कोऽपि नृपापराधी
निहन्यतेऽसौ सपरिच्छदोऽपि ॥ २० ॥
यद्येवमर्चादिक[2]पुण्यमेतत्
सर्वात्मना[3] स्वार्थकरं निरुक्तम् ।
तदेतदेवाद्रियतां जनौघः
किं नामजापे विहिता प्रवृत्तिः ॥ २१ ॥
साधूच्यते साधुजन त्वयेदं
परं विवेकोऽत्र कृतो महद्भिः ।
इमे गृहस्थाः खलु ये समर्था-
स्ते द्रव्यभावाऽर्चनका[4]धिकारिणः ॥ २२ ॥

---

८१ शालिभद्रस्येव स्त्रीसमूहयुक्तस्य भुक्तये पुण्यफलमभूत् च पुनः चोरस्येव स्त्रीसमूहादियुक्तस्य पापफलं भुक्तये स्यात्तथेति । ८२ पूजादि । ८३ सर्वप्रकारेण । ८४ पूजनक ।

ये योगिनो द्रव्यपरिग्रहेण
विना विभान्तीह भवे महान्तः ।
तेषां त्वै[85]धीशस्मृतिरेव युक्ता
तयै[86]व तत्[87]स्वार्थकृतिः समस्ता ॥ २३ ॥
यथा विषं[88] गारुडहंसजाङ्गुली-
मन्त्रस्य जापाच्छ्रवणाच्च देहिनाम् ।
मूर्छावतां तत्त्वमजानतामपि
विनश्यतीत्थं भगवत्स्मृतेरघम् ॥ २४ ॥
तथा[89]ऽस्थिभक्षीति हुमायपक्षी

---

८५ भगवत् । ८६ अधीशस्मृत्या । ८७ तेषां योगिनां स्वार्थसिद्धिः सर्वापि भवेत् । ८८ ननु योगिनः सम्यग्भगवत्स्वरूपं यथास्थितं न विदन्ति भगवानपि निःस्पृहो नीरागश्च ततः केवलं भगवत्स्मृत्या एव योगिनां किं सिध्येदित्याह यथा विषमिति । ननु भगवद्ध्यायका योगिनस्तु यदि भगवत्स्वरूपं न जानन्ति परं भगवांस्तु जानाति अयं ध्याता मां ध्यायति एवं गारुडिको गारुडादिमन्त्रान्वेत्ति परं विषार्त्तो यद्यपि गारुडादिमन्त्रस्वरूपं न जानाति तथाप्यस्य गारुडिकप्रयुक्तगारुडादिमन्त्रप्रयोगाद्विषनाश एवं योगिनोऽपि सम्यग्भगवज्ज्ञानाभावेऽपि भगवन्नामाक्षरप्रभावात् दुष्कर्मक्षये पापं नश्यतीति एवमेकपक्षभूतेऽपि ज्ञानेऽभीष्टसिद्धिः । ८९ आस्तामेकपक्षजमपि ज्ञानमुभयपक्षविकलेऽपि ज्ञाने संयोगमात्रादपीष्टसिद्धिर्यथा हुमायपक्षिणो यस्य शिरसि छाया निपतति स पातसाहिर्भवति तत्र हुमायोऽपि न वेत्ति यदस्य शीर्षेऽहं छायां करोमि यस्य शीर्षे छाया भवेत्सोऽपि न वेत्ति मम शीर्षे हुमायः छायां करोत्येवं

प्रसिद्धिमान्संततजीवरक्षी ।
उड्डीयमानस्य यदस्य छाया
यन्मुर्द्धगा सोऽत्र भवेन्नरेन्द्रः ॥ २५ ॥

नायं खगो वेत्ति यदस्य शीर्षे
छायां करोमीति तथेतरोऽपि ।
जानाति नैवं मम मस्तकेऽसौ
छायां करोतीति[90] मतं द्वयोर्न ॥ २६॥

तथापि तच्छायमहात्मतोदया–
दधीशतोदेति दरिद्रतापहा ।
अजानतोरप्यथ सिद्धिरेवं
कथं स्मृतेर्याति न पापमीशितुः ॥ २७ ॥

[91]अस्मिन्गते सर्वत आत्मशुद्धिः
सत्याममुष्यां[92] परमात्मबोधः ।
जातेऽत्र[93] नो कश्चन कर्मबन्धः
कर्मप्रणाशे किल मोक्षलक्ष्मीः ॥ २८ ॥

---

द्वयोराप्यज्ञानेऽपि अन्यस्य नरेन्द्रत्वं सिध्यत्येवं सेवकोऽपि सम्यग्भगवत्स्वरूपं न जानाति भगवानपि नीरागत्वात्सेवकस्याभीष्टकृतौ नोद्यच्छत तथापि सेवकस्य स्वामिस्मरणदर्शनादिसंयोगमहात्म्याद्देवाभीष्टसिद्धिः स्यादिति काव्यत्रयेणाह तथास्थिमक्षीत्यादि ।
९० ज्ञानं । ९१ पापे । ९२ आत्मशुद्धौ । ९३ परमात्मबोधे ।

९४अस्या हि सत्यां स्थितिरक्षया स्याद्
अनन्तविज्ञानमनन्तदृष्टिः ।
एकस्वभावत्वमनन्तवीर्यं
जागर्ति सज्ज्योतिरनन्तसौख्यम् ॥ २९ ॥

इति जैनतत्त्वसारे जीवकर्मविचारे सूरचन्द्रमनःस्थिरीकारे नास्तिकस्य द्रव्यभावधर्मफलसम्प्रापणोक्तिलेश एकोनविंशोऽधिकारः ।



---

९४ मोक्षलक्ष्म्यां ।

## ॥ अथ विंशोऽधिकारः ॥

हे स्वामिनो यूयमिति प्रवक्थ
यदात्मबोधान्न विनास्ति मुक्तिः ।
[९५]तर्हीतरे[९६]ऽन्यान्कथमाहुरस्या
हेतूं[९७]स्तदुक्तिर्न समा तथाहि ॥ १ ॥
ये वैष्णवाः केचन विष्णुवादिनो
विष्णोः सकाशान्निगदन्ति मुक्तिम् ।
ये ब्रह्मनिष्ठाः किल ब्रह्मणस्तां
शैवाः शिवाच्छक्तिकृतां तु शाक्ताः ॥ २ ॥
तेषां न चात्मावगमो निदानं
मुक्तेस्तथा नास्त्यथ [९८]निर्णयोऽयम् ।
यदात्मबोधाज्जनितैव मुक्ति-
स्ततः किमेवं क्रियते विनिश्चयः ॥ ३ ॥

---

९५ वैष्णवादयः । ९६ विष्णुप्रमुखान् हेतून् । ९७ तस्मात्कारणादियं भवतां उक्तिरन्यैर्न समा वाऽन्येषां मुक्तिर्न भवद्भिः समा ९८ ननु यदि वैष्णवादीनां विष्णुमुख्येभ्यो मुक्तिस्तर्हि अयं यो निश्चयो भवद्भिः प्रोच्यते स निश्चयो न ऐकान्तिकः कोऽयं निर्णय यद्यस्मात् आत्मबोधादेव मुक्तिर्जायते अयं निश्चयो न युक्तो मुक्तेर्बहुहेतुप्राप्यत्वात् तत्तस्मात्कारणात् एवं पूर्वोक्तो यो विनिश्चयः किमिति कथं क्रियते इति पृच्छन्तमाह सत्यं यदेते ।

सत्यं यदेते किल लोकरूढि-
रूढास्तु विष्ण्वादिकभिन्नवीक्षिणः ।
परन्तु तत्त्वार्थत[599] एष आत्मै-
वार्थोऽभिवाच्यो ननु विष्णुमुख्यैः ॥ ४ ॥
[600]कथं हि वेवेष्ट्यथ विष्णुरात्मा
व्यापेरथ ब्रह्म तथैष आत्मा ।
शिवोऽपि चात्मा शिवहेतुतः स्या-
च्छक्तिस्तथात्माश्रितवीर्यमेतत् ॥ ५ ॥
इत्थं हि सर्वैरपि विष्णुमुख्यैः
शब्दैरसावात्मक एव बोध्यः ।
ततस्त्वतो मुक्तिरियं न कस्मात्
प्राप्येति तत्त्वं हृदि तैरपीक्ष्यम् ॥ ६ ॥
चेन्नेति विष्णुप्रमुखेभ्य एभ्यो
मुक्तिस्तदा वैष्णवमुख्यलोकाः ।
सन्तो गृहस्था इह विष्णुमुख्यान्

---

५९९ परमार्थतः । ६०० केवलज्ञानजातलोकालोकस्वरूपो ज्ञा-नात्मना व्यापकत्वेन विष्णुः । परब्रह्मसञ्ज्ञनिजशुद्धात्मभावनात्म-कत्वेन ब्रह्मा । शिवं निर्वाणं प्राप्तं येनेति शिवः कर्ममुक्तः सिद्धत्वा-वस्थामधिश्रितः, यदुच्यते योगवासिष्ठादौ, "जीवः शिवः शिवो जीवो, नान्तरं शिवजीवयोः । कर्मबद्धो भवेज्जीवः, कर्ममुक्तः सदा शिवः" इति यद्वा अत्रत्यभावापेक्षया शिवमस्यास्तीति शिवः शिवसत्तावान् इत्यर्थः । ? विचारणीयम् ।

एवार्चयन्तः परितो जपन्तु ॥ ७ ॥

परं तपः संयमयुक्तता क्षमा
निःसंगता रागरुषापनोदौ ।
पञ्चेन्द्रियाणां विषयाद्विरागो
ध्यानात्मबोधादि विधीयते कथं ॥ ८ ॥

एषैव सेवा ननु विष्णुब्रह्मा-
दीनां तदेयं कुत आश्रितास्ति ।
भोस्तेभ्य एवेति तदा न तेषां
वागस्ति हस्तोऽपि यतो ऽन्यबोधैः[२] ॥ ९ ॥

तद्ध्यायियोगिभ्य इयं प्रवृत्ति-
स्तत्तैः कुतोऽसौ नि[३]गदोपलब्धा ।
अध्यात्मयोगादिति चेत्तदानीं
तस्य प्रणेताऽभवदत्र को भोः ॥ १० ॥

निरञ्जनैर्निष्क्रियकैर्न चायं
वक्तुं हि योग्यः खलु विष्णुमुख्यैः ।
सो ऽध्यात्मयोगः कुतराविरासीत्
चेदादियोगिभ्य इति प्रवादः ॥ ११ ॥

तैरप्यसावात्मभवावबोधा-
दध्यात्मयोगो ऽवगतो न चान्यतः ।

---

२ ध्यानम् । ३ वद ।

अनिन्द्रियान्निष्क्रियकान्निरञ्जना-
न्नित्यैकरूपान्न तु विष्णुमुख्यात् ॥ १२ ॥

स्वादात्मनो योऽवगमो बभूव
[४]भावात्समाख्याद्गतरागरोषात् ।
[५]अपूर्वला[६]भान्निखिलार्थदृष्टे-
रध्यात्मयोगः स्वत एव सिद्धः ॥ १३ ॥

एवं हि यश्चात्मभवात्मबोध-
स्तस्मान्नृणां जायत एव मुक्तिः ।
[७]अस्या न हेतुस्त्वपरोऽस्ति विष्णु-
मुख्यस्तदात्माऽ[८]वगमस्पृहेष्या ॥ १४ ॥

ये तु स्वभावान्निगदन्ति मुक्तिं
तत्राप्यसावेव निवेदितोऽर्थः ।
स्वस्यात्मनो [९]भाव इहाभिरुक्ता
तदात्मलाभान्ननु सिद्धिलक्ष्मीः ॥ १५ ॥

एवं समस्तैरपि मुक्तिमिच्छुभि-
र्मुक्तिः समेष्या नियतात्मबोधात् ।

---

४ समभावात् । ५ अप्राप्तताद्दग्लाभात् । ६ सकलद्रव्यदर्शनात् । ७ मुक्तेः । ८ ज्ञान । ९ भू प्राप्तावित्यस्य भावः प्राप्तिरित्यर्थः स्वस्यात्मनो भावः प्राप्तिः याथातथ्येनात्मनोऽवबोधेनात्मलाभ इत्यर्थः ।

अस्या[10] निमित्तं नहि किञ्चिदस्मा-
दन्यत्त्रयगादि प्रगुणैर्यदुच्यते ॥ १६ ॥
यावत्कषायान्विषयान्निषेवते
संसार एवैष निर्ग्रंथ[11] आत्मा ।
एतद्[12]विमुक्तोऽजनि यावदात्मा-
वबोधयुग्मोक्ष इतीहितोऽयम्[13] ॥ १७ ॥
ज्ञानं तथा दर्शनकं चरित्र-
मात्मैष वाच्यो न हि किञ्चिदस्मात् ।
भिन्नं यदेतन्मय एव देह-
मेष श्रितस्तिष्ठति कर्मनिष्ठः[14] ॥ १८ ॥
आत्मानमात्मैष यदाऽभिवेत्ति
मोहक्षयादात्मनि चात्मशक्त्या[15] ।
तदेव तस्यो[16]दितमात्मविद्भि-
र्ज्ञानं च दृष्टि[17]श्चरणं तथाप्तैः[18] ॥ १९ ॥
आत्मावबोधेन निवार्यमात्मा-
ऽज्ञानोद्भवं दुःखमनन्तकालिकम् ।
अनेककष्टाचरणैरपीदं
विनात्मबोधादनिवार्यमस्ति यत् ॥ २० ॥

---

१० मुक्तेः । ११ वक्तव्यः । १२ कर्म ( कषायविषय ? ) । १३ [illegible] आत्मा । १४ युक्तः । १५ -स्वज्ञानबलेन । १६ आत्मनः । १७ द[illegible] र्शनं । १८ अर्हद्भिः परममन्ययसङ्घोत्तिरिर्णीः ।

चिद्रूप आत्मायमधिष्ठितस्तनुं
कर्माऽनुभावादसकौ[19] शरीरी ।
ध्यानाग्निनिर्दग्धसमस्तकर्मा
स्याच्छुद्ध आत्मा तु तदा निरञ्जनः ॥ २१ ॥

इतीयता[20] सिद्धमिदं विदन्तो[21]
यदात्मबोधान्न परोऽस्ति सिद्धये ।
हेतुस्ततोऽत्रैव यतध्वमध्वनि
येनात्मनः स्थानमहो महोदये[22] ॥ २२ ॥

मुनीश साधूदित एष मुक्ते-
र्मार्गो जिनेन्द्रागमयुक्तिसिद्धः ।
उत्सर्गनोत्सर्गहठाभिमुक्तः[23]
श्रेयैःश्रिये[24] केवलराजयोगात् ॥ २३ ॥

परं हि यः सर्वमतानुयायी[25]
मार्गोऽस्ति मुक्तेर्द्रुतमात्मदृष्ट्यै[26] ।
अध्यात्मविद्याधिगमैकहेतुः
स मे निवेद्यः सरलः श्रमं विना ॥ २४ ॥

अहो त्वदीया खलु सूक्ष्मदृष्टि-

---

१९ प्रभावात् । २० प्रबन्धेन । २१ भो जानन्तः भो पण्डिता इत्यर्थः । २२ मोक्षे । २३ उत्सर्गापवादलक्षणैकान्तकर्त्तव्यतारूपहठ रहितः स्याद्वादाधिश्रित इत्यर्थः । २४ मोक्ष । २५ दर्शन । २६ ज्ञानाय ।

यन्मङ्क्षु मुक्त्यर्थमयं विचारः ।
चित्ते समुत्पन्न इयानिदानीं
मन्ये तदा तेऽत्र मनोऽस्ति मुक्त्यै ॥ २५ ॥
आकर्णय त्वं मयका निगद्य-
मानं मुनेर्मुक्तिपथं समर्थम् ।
सिद्धान्तवेदान्तरहस्यभूतं
गुरूपदेशादऽधिगम्य[२७] किञ्चित् ॥ २६ ॥
मुक्तिं समिच्छुर्मनुजः पुरस्तात्
करोतु चित्ते स विचारमेतत् ।
आत्माह्ययं योगिभिरेष शुद्धो
बुद्धश्च मुक्तश्च निरञ्जनश्च ॥ २७ ॥
इत्युच्यते तर्हि तु केन बद्धो
मुक्तस्त्वयं बद्धयत एप कस्मात् ।
ज्ञातं भ्रमेणेति यमूचुराद्याः
कर्मेति [२८]मोहेति भ्रमेत्यविद्या ॥ २८ ॥
कर्त्तेति मायेति गुणेति दैवं

---

२७ ज्ञात्वा । २८ मोहेत्यादावितिनैव विभक्त्यर्थस्योक्तत्वान्न विभक्तिर्यथा "श्रीरामेति जनार्दनेति जगतां नाथेति नारायणेत्यानन्देति दयावरेति कमलाकान्तेति कृष्णेति वा । श्रीमन्नाममहामृताब्धिलहरीकल्लोलमग्नं मुहुर्मुह्यन्तं गलदश्रुनेत्रमवशं मां नाथ नित्यं कुरु ? " इति श्रीभगवतः कवेरुक्तिः पद्यावल्यां तथात्रापि ।

मिथ्येति चाज्ञानमितीतिशब्दैः ।
सद्योगिनो[२९]ऽमूंन्निगदन्ति तज्ज्ञा
भ्रमं ह्यनेनैव निबद्ध आत्मा ॥ २९ ॥
॥ विशेषकम् ॥

[३०]भ्रमोऽत्र मिथ्यानिजकल्पनोत्थितो

---

२९ शब्दान् । ३० भ्रमोत्रेति मिथ्या असत्या या निजकल्पना स्वमानासिकविकारस्तत उत्थित उत्पन्नो य एवंविधो यो भ्रमो मिथ्याज्ञानमनात्मीयवस्तुन्यात्मीयवस्त्ववगमः स्त्रीपुत्रमित्रमातापितृद्रव्यशरीरादिसहवर्त्तिवस्तुषु अननुगामित्वेनास्वीयत्वान्ममेदमिति मिथ्याज्ञानं भ्रमः तेन संसारे शरीरे च मनोरमवस्तुषु रक्तमनोनिवर्त्तनं संसारे शरीरे च वर्त्तमाने दुर्वस्तुनि दुष्टमनोनिवृत्तिरिति वीतरागत्वेन रक्तद्विष्टमनस्त्वनापादनं सम्यग्ज्ञानं तद्विपरीतं ज्ञानं मिथ्याज्ञानं स एव भ्रमः अतस्मिंस्तद्ग्रहो भ्रमः यथा शुकग्रहणार्थं वृक्षोपरि चक्रं स्थापयन्ति तच्चक्रकर्णिकायां च कारवेल्लकं स्थापयन्ति तत्र च ममेदं भक्ष्यमिति मिथ्याज्ञानेन भ्रमेण शुक आगत्य तिष्ठति तस्य स्थानतस्तच्चक्रं स्वयमेव च भ्रमति तद्भ्रमणात्तत्रस्थः शुकः केनाप्यगृहीतोऽपि भ्रमान्मन्यते यदहं केनापि गृहीतो वा पाशे निपातितः ततश्चक्रेण सह स्वयमपि भ्राम्यन्तच्चक्रं स्वेष्टमिवागृह्य स्वमबद्धमपिबद्धं मन्यमानः चूचूत्कारान् करोति तद्वेलायामशङ्कितो यदि उड्डीय याति तदा मुक्तः स्यात् अन्यथा भ्रमेणाबद्धोपि तद्ग्राहकेण गृहीत्वा बध्यते इत्येवं नलिनीशुको यथा भ्रमेणैवं बध्यते पुनर्मर्कटकोऽप्यात्मानं भ्रमेणैव बन्धयति । यथा मर्कटग्राहकाः चणकभृतपात्रं स्थापयन्ति तत्राहारार्थी मर्कटो करं क्षिप्त्वा चणकमुष्टिं बद्ध्वा तादृगमेवकरं कर्षति तदा तु समुष्टिः करो न निर्गच्छति तदाऽयं जानाति अहमन्तरा केनचिद् बद्धः तदाऽबद्धोपि स्वबद्ध-

येनैव बद्धो नलिनीशुको यथा ।
बद्धः पुनर्मर्कटकोऽपि तद्वत्
तथैष आत्मा भ्रमतो निबद्धः ॥ ३० ॥
भ्रमे तु मुक्ते मनसः सकाशा-
दात्मैष मुक्तो भवतीति सिद्धम् ।
अस्मिंस्तु मुक्ते हि भवेदभेद-
स्तदात्मनः श्रीपरमात्मनश्च ॥ ३१ ॥
यदानयोर्वीक्षत एकभावं

---

मिति मन्यमानः चीर्चीत्कारान्कुर्वन् तद्वन्धकेन स बध्यते यदि तदा स्वबद्धां मुष्टिं छोटयित्वा याति तदाऽबद्धो भवति परमयमपि स्वकीय-मिथ्याभ्रमात् स्वं बन्धयति । एवमयमात्मापि अस्वीये वस्तुनि ममे-दमिति स्वबुद्धिं कुर्वाणः कर्मभिर्बध्यते यदा तु शरीरादिके वस्तुनि अनात्मीयतामाचरति अरक्तोऽद्विष्टश्च तिष्ठति तदा संसारस्थोऽपि मुक्तो भवति यदा त्वयमात्मा मुक्तस्तदान्तरात्मनः पारमात्म्यं प्रादुःष्यात् यत उच्यते । बहिरात्मान्तरात्मापरात्माभेदादात्मा त्रिविधः तत्र यावता हेयोपादेयविचारवैकल्यात् केवलेन्द्रियविषयासक्तो भवेत्तदा बहिरात्मा हेयोपादेयज्ञानवान् विषयसुखपराङ्मुखो भवान्तर्वर्तिवस्तुरक्तोद्विष्टमनो-निवृत्तिमान् विरक्तोऽन्तरात्मा अयमेव यदा सिद्धकेवलात्मज्ञानस्तदाप-रात्मेत्युच्यते तदात्मपरमात्मनोर्न भेदवान् भवति यदा तु योगी आत्मा-नमात्मनात्मनि परमात्मभूतं पश्यति तदा योगी आत्मज्ञानी उच्यते स हि केवलज्ञानीति पर्यायान्तरं लभते ततश्चायं कर्ममुक्तः क्रियामुक्तः भ्रान्तिमुक्तश्च स्यात् इति योगिसमाचारः । अथ काव्यद्वयेनोक्तामे-वावस्थां द्रढयति यदा त्वयमित्यादि ।

योगी तदात्मावगमी निगद्यते ।
स केवलज्ञानमयो मुनीश्वरः
कर्मक्रियाभ्रान्तिविमुक्त उक्तः ॥ ३२ ॥
यदा त्वयं मुक्त इति प्रसिद्ध-
स्तदा हि सर्वत्र ममत्वमुक्तः ।
घनं हि किं सैप मनःशरीर-
सुखासुखज्ञानविमर्श[31]शून्यः ॥ ३३ ॥
न पुण्यपापे भवतोऽस्य मुक्तितो
मम क्रियेयं मम चैष कालः ।
सङ्गी[32] ममोऽयं सुकृतं ममेद-
मित्याद्यभिद्यान्मनसो विनिर्जयात् ॥ ३४ ॥
स तावतेहास्ति शरीरधारी
सूक्ष्मक्रियातोऽपि न निष्क्रियो यत् ।
यावद्यदा सूक्ष्मक्रियापि नष्टा
मुक्तस्तदा सिद्ध्यति सिद्धतासेः[33] ॥ ३५ ॥
विद्वन् विमर्शः क्रियतामयं क्रिया-
वन्तोऽथवा निष्क्रियकाश्च सिद्धाः
चेन्निष्क्रिया ज्ञानजदर्शनोत्थ-
क्रियाऽक्रियेष्वेषु[34] कथं न सिध्येत् ॥ ३६ ॥
सत्यं मुने ज्ञानजदर्शनोद्भवा

---

३१ विचार । ३२ सहायः । ३३ प्राप्तेः । ३४ सिद्धेषु ।

सैषा क्रिया सिद्धिगतेषु नास्ति ।
कथं यतः सैषु यदा तु लोके
कैवल्यलब्धिः[३५] समभूत्तदानीम् ॥ ३७ ॥
क्रिये इमे द्वे युगपत्समास्तां
ये ज्ञेयदृश्ये इह ते अभूतां ।
ततो नृजातौ[३६] किल सक्रियत्व-
मभूत्तु सिद्धौ खलु निष्क्रियत्वम् ॥ ३८ ॥
एवं तु निष्क्रियता प्रसिद्धा
सिद्धेषु सिद्धास्त्यवधारणेन ।
सर्वस्य चैतस्य मनोनिरोधो
हेतुस्ततोऽत्रैव रमध्वमध्वानि ॥ ३९ ॥

इति जैनतत्त्वसारे जीवकर्मविचारे सूरचन्द्रमनःस्थिरीकारे आस्तिकनास्तिकानां द्वयेषामपि परम्परया मनोनिर्विषयतापादनेन च मुक्तिप्रापणकारणोक्तिलेशो विंशोऽधिकारः ॥

---

३५ केवलज्ञान । ३६ पुनरत्र नोदको नोदयन्नाह, पूज्याः सिद्धा अपि सक्रिया भवन्ति, कथं, यत उच्यते, सिद्धा जानन्ति पश्यन्ति च तर्हि ज्ञानक्रियां च दर्शनक्रियां च कुर्वन्तीति ज्ञानदर्शनक्रियायाः सद्भावात् कथं निष्क्रियत्वमिति निष्क्रियाः सिद्धा इति न घटते । नैवं यदैवात्र मनुष्यभवे सिद्धस्य केवलज्ञानमभूत्तदैव यज्ज्ञातव्यं यच्च द्रष्टव्यमासीत्त-द्दृष्टाभूत् सिद्धत्वावस्थायां नवं किमपि न जानाति न पश्यति सर्वा-तीतानागतवर्तमानभावानां केवललाभसमये एव ज्ञानाद्दर्शनाद्येति सर्वं सम्यक्तया ध्येयम् ।

# ॥ अथ एकविंशोऽधिकारः ॥

अमुं विचारं मुनयः पुरातना
ग्रन्थेषु जग्रन्थुरतीव विस्तृतम् ।
परं न तत्र द्रुतमल्पमेधसा-
*मैदंयुगीनानां मतिः प्रसारिणी ॥ १ ॥
मया परप्रेरणपारवश्या-
दजानतापीति विधूत्य धृष्टताम् ।
प्रश्ना व्यतायन्त कियन्त एते
परेण पृष्टाः पठितोत्तरोत्तराः ॥ २ ॥
शैवेन केनापि च जीवकर्मणी
आश्रित्य पृच्छाः प्रसभादिमाः कृताः ।
माभूज्जिनाधीशमतावहेले-
त्यवेत्य मङ्क्षूत्तरितं मयैवम् ॥ ३ ॥
यथा यथा तेन हृदुत्थतर्क-
माश्रित्य पृच्छाः सहसाऽक्रियन्त ।
तथा तदुक्तं पुरतो निधाय
मया व्यतार्युत्तरमार्हतेन ॥ ४ ॥
मया त्विदं केवललौकिकोक्ति-
प्रसिद्धमाधीयत पृष्ठशासनम् ।

---

* मैदंयुगीना न ?

पुराणशास्त्राहितबुद्धयस्तु
पुरातनीं युक्तिमिहाद्रियन्ताम् ॥ ५ ॥
परं विचारेऽत्र न गोचरो मे
प्रायेण मुह्यन्ति मनीषिणोऽपि ।
अमुं विना केवलिनं न वक्तुं
व्यक्तोपि शक्तः सकलश्रुतेक्षी ॥ ६ ॥
अतस्तु वैयात्यमिदं मदीय-
मुदीक्ष्य दक्षैर्न हसो विधेयः ।
बालोऽपि पृष्ठो निगदेत्प्रमाणं
वार्धेर्भुजाभ्यां स्वधिया न किं वा ॥ ७ ॥
यद्वेदमेवात्मधियां समस्तु
शास्त्रं यतः शासनमस्त्यथास्मात् ।
यदुक्तिप्रत्युक्तिनिर्युक्तियुक्तं
तद्वाभियुक्ताः प्रणयन्ति शास्त्रम् ॥ ८ ॥
यद्वास्ति पूर्वेष्वखिलोपि वर्णा-
नुयोग एतन्न्यगदन्विदांवराः ।
इयं तदा वर्णपरम्परापि
तत्रास्ति तच्छास्त्रमिदं भवत्वपि ॥ ९ ॥
आनन्दनायास्तिकनास्तिकानां
ममोद्यमोऽयं सफलोऽस्तु सर्वः ।

आद्येषु[37] चास्तिक्यगुणप्रसारणा-
दन्त्येषु[38] नास्तिक्यगुणापसारणात् ॥ १० ॥

चिरं विचारं परिचिन्वताऽमु
यन्न्यूनमन्यूनमवादि वादतः ।
कदाग्रहाद्वा भ्रमसम्भ्रमाभ्यां
तन्मे मृषा[39] दुष्कृतमस्तु वस्तुतः[40] ॥ ११ ॥

मया जिनाधीशवचस्सु तन्वता
श्रद्धानमेवं य उपार्जि सज्जनाः ।
धर्मस्तदेतेन निरस्त[41]कर्मा
निर्मीत[42]शर्माऽस्तु जनः समस्तः ॥ १२ ॥

वरतरखरतरगणधरयुगवर-
जिनराजसूरिसाम्राज्ये ।
तत्पट्टाचार्यश्रीजिन-
सागरसूरिषु महत्सु ॥ १३ ॥

अमरसरसि वरनगरे
श्रीशीतलनाथलब्धसान्निध्यात् ।
ग्रन्थोऽग्रन्थि समर्थः
सुविदेऽयं सूरचन्द्रेण ॥ १४ ॥ युग्मम् ॥

---

३७ आस्तिकेषु । ३८ नास्तिकेषु । ३९ मिथ्या । ४० तत्त्वतः ।
४१ गत । ४२ सिद्ध ।

श्रीमत्खरतरवरगण-
सुरगिरिसुरशाखिसन्निभः समभूत् ।
जिनभद्रसूरिराजो
ऽसमः प्रकाण्डोऽभवत्तत्र ॥ १५ ॥

श्रीमेरुसुन्दरगुरुः
पाठकमुख्यस्ततो बभूवाथ ।
तत्र मँहीयः[43]शाखा-
प्रायः श्रीक्षान्तिमन्दिरकः ॥ १६ ॥

तार्किकऋषभा अभवन्
हर्षप्रियपाठकाः [44]प्रतिलताभाः ।
तस्यां समभूवन्निह
सुरभिततरुमञ्जरीतुल्याः ॥ १७ ॥

चारित्रोदयवाचक-
नामानस्तेष्वमुः फलसमानाः ।
श्रीवीरकलशसगुरवो
गीतार्थाः परमसंविग्नाः ॥ १८ ॥

---

४३ बृहत् । ४४ प्रतिशाखाभाः ।

तेभ्यो वयं भवामो
बीजाभास्तत्र सूरचन्द्रोऽहं ।
गणिपद्मवल्लभपट्ट-
द्वितीयीको गुरुभ्राता ॥ १९ ॥

अस्मत्तु हीरसार-
प्रमुखा अङ्कुरकरणयः सन्ति ।
तेऽपि फलन्तु फलौघैः
सुशिष्य-रूपैः प्रमापट्टभिः ॥ २० ॥

तेनामुको वाचकसूरचन्द्र-
नाम्ना रसज्ञाफलमित्थमिच्छता ।
ग्रन्थो ऽभितोऽग्रन्थि मया स्वकीया-
न्यदीयचेतः स्थिरतोपसम्पदे ॥ २१ ॥

एवं यथाशेमुषि जैनतत्त्व-
सारो मयाऽस्मारि मनःप्रसत्त्यै ।
उत्सूत्रमासूत्रितमत्र किञ्चिद्
यत्तद्विशोध्यं सुविशुद्धधीभिः ॥ २२ ॥

---

४९ समाः ।

वर्षे नन्द[48]तुरङ्गचन्द्रकलामानेऽश्वयुक्पूर्णिमा
ज्ञे[47] योगे विजयेऽहमेतममलं पूर्णं व्यधामादरात्
ग्रन्थं वाचकसूरचन्द्रविबुधः प्रश्नोत्तरालङ्कृतं
साहाय्याद्वरपद्मवल्लभगणेरर्हत्प्रसादश्रियै ॥ २२ ॥

इति जैनतत्त्वसारे जीवकर्मविचारे सूरचन्द्रमनःस्थिरीकारे ग्रन्थग्रथनोत्पन्नपुण्यजनतासमर्पणस्वीयगच्छगच्छनायक-सम्प्रदायगुरुनामस्वकीयगुरुभ्रात्रादिनामकीर्त्तनोक्तिलेश एकविंशोऽधिकारः सम्पूर्णः ।

॥ तत्सम्पूर्णे च परिपूर्णोऽयं जैनतत्त्वसारो ग्रन्थः ॥

---

४६ (१६७९) । ४७ बुधे । ४८ पदैकदेशे पदसमुदायोपचारात् इति सूरइति सूरनाडी—सूर्यनाडीत्यर्थः चन्द्रइति चन्द्रनाडीत्यर्थः मनइति सुषुम्णानाडीसूचनं यदन्तर्गतं मनः स्थिरीस्यात् । तथा च हठप्रदीपिका । मारुते मध्यसञ्चारे मनःस्थैर्यं प्रजायते इति । ततो मनःस्थिरीकार इति सुषुम्णोच्यते । आसां नाडीनां स्थिरीकारो यस्मिन्नित्येकास्थिरीकार-शब्दालापाश्रयेणार्थप्राप्तिः पक्षे ग्रन्थकर्त्तृनामसूचनमिति ध्येयम् ॥

## शुद्धिपत्रक.

(मूलतुं.)

| पृष्ठ. | लिटि. | अशुद्ध. | शुद्ध. |
|---|---|---|---|
| १ | ११ | निर्दोषम् | निर्दोष |
| १ | २२ | लाभात्तया | लाभतया |
| २ | ११ | र्वगणा | वर्गणा |
| ३ | १७ | च्छम्नानीव | छन्नानीव |
| ३ | २१ | स्वयमध | स्वयसूत्रम् । |
| ४ | १३ | सगुणत्व | सगुणत्वं |
| ४ | १५ | कर्त्तुत्व | कर्तृत्वं |
| ५ | २१ | पारमर्थ्या | पारमार्थ्या |
| ५ | २३ | प्रैर्ग्यं | प्रेर्य |
| ६ | ११ | तादृशा | तादृशी |
| ६ | ११ | बुद्धि | बुद्धि |
| ६ | २३ | दुख | दुःख |
| ७ | ७ | ऋपि | ऋपि |
| ७ | १३ | भुत | भूत |
| ७ | १८ | कृत्यक् | कृत्यक |
| ७ | २२ | पारवगात | पारवश्यात् |
| ११ | ५ | दायति | दायतिः |
| १२ | ११ | पश्यतोऽत्र | पश्यतात्र |
| १३ | ११ | समाधीश्च | समार्थाश्च |
| १३ | १२ | कंथ | कथं |
| १४ | २२ | मल्लो | मन्त्रो |

| | | | |
|---|---|---|---|
| ३४ | २० | सृष्टि | सृष्टिं |
| ३५ | १४ | द्व्यमी | घद्मी |
| ३६ | २१ | परह्मनामनि | परब्रह्मनाम्नः |
| ३७ | १४ | तस्य | तस्तस्य |
| ३७ | २१ | वितारितः | निवारितः |
| ३९ | १८ | स्थिरेक | स्थिरैक |
| ३९ | १८ | त्यनेक | त्येक |
| ३९ | २१ | तदा | स्तदा |
| ३९ | २२ | द्दर्श | दर्श |
| ४२ | ११ | रुपा | रूपा |
| ४२ | १९ | यदी | यदि |
| ४३ | ३ | यो | दो |
| ४३ | ८ | सागसा- | सागस- |
| ४४ | २१ | पृष्ठ | पृष्ट |
| ४६ | २० | त्वदुक्त | त्वदुक्तः |
| ४८ | १४ | यथैवं | यथैव |
| ५० | ६ | यन्मु | यन्मुं |
| ५० | १७ | सिद्दा | सिद्धा |
| ५१ | १३ | णीयते | लीयते |
| ५७ | २० | उसन्ना | उत्पन्ना |
| ६२ | ४ | सुर | सूर |
| ६४ | ८ | पण्ड | खण्ड |
| ६५ | २१ | ऽ | ऽन्तु |
| ६९ | ९ | करम्य | करम्भ |
| ६९ | १३ | समीर | स समीर |

| | | | |
|---|---|---|---|
| १५ | ७ | तं तं [७६]श्रंवसी | तं[७६] तं श्रवसी |
| १५ | १५ | कालैश्व | कालैश्च |
| १६ | ७ | न ते तेन | नसा ते न |
| १६ | ९ | त्ययमेव | त्यैंयमेव |
| १८ | ७ | न रूप | नरूप |
| १९ | ६ | सुष्टुदुष्टु | सुष्ठुदुष्ठु |
| २१ | ४ | प्रयोक्त | प्रयोक् |
| २१ | १० | त्मनो | त्मानो |
| २२ | १२ | तेष | तेषु |
| २३ | २० | पृष्ठे | पृष्टे |
| २४ | १२ | मुत्पन | मुत्पन्न |
| २५ | ६ | पस्पि | परिप |
| २५ | १६ | न तु | ननु |
| २५ | २० | भावाना | भावना |
| २६ | १३ | ऽपेती | ऽपैती |
| २६ | १८ | संन्त | सन्तं |
| २७ | १ | च | न |
| २७ | १४ | सुर | मूर |
| २७ | १९ | दृप्त्यां | दृत्याः |
| २८ | १८ | मागि | मगि |
| ३१ | ५ | संसार | संसारा |
| ३२ | ६ | गुणो न | गुणेन |
| ३२ | १४ | मिर्यति | मियति |
| ३२ | २२ | याथार्थ्यं | याथार्थ्य |
| ३३ | ७ | य नि | यनि |

| | | | |
|---|---|---|---|
| ३४ | २० | स्राष्ट | सृष्टिं |
| ३५ | १४ | द्यमी | द्यदमी |
| ३६ | २१ | परह्मनामनि | परब्रह्मनाम्नः |
| ३७ | १४ | तस्य | तस्तस्य |
| ३७ | २१ | वितारितः | निवारितः |
| ३९ | १८ | स्थिरेक | स्थिरैक |
| ३९ | १८ | त्यनेक | त्येक |
| ३९ | २१ | तदा | स्तदा |
| ३९ | २२ | दर्श | दर्श |
| ४२ | ११ | रुपा | रूपा |
| ४२ | १९ | यदी | यदि |
| ४३ | ३ | यो | दो |
| ४३ | ८ | सागसा- | सागस- |
| ४४ | २१ | पृष्ठ | पृष्ट |
| ४६ | २० | त्वदुक्त | त्वदुक्तः |
| ४८ | १४ | यथैवं | यथैव |
| ५० | ६ | यन्मु | यन्मुं |
| ५० | १७ | सिद्वा | सिद्धा |
| ५१ | १३ | णीयते | लीयते |
| ५७ | २० | उसन्ना | उत्पन्ना |
| ६२ | ५ | सुर | सूर |
| ६४ | ८ | पण्द | खण्ड |
| ६५ | २१ | ऽ | ऽस्तु |
| ६९ | ९ | करम्य | कारम्भ |
| ६९ | १२ | समीर | स समीर |

| | | | |
|---|---|---|---|
| ७३ | १२ | दूद्गत | दृद्गत |
| ७४ | १ | सिन्धुराये | सिन्धुरा ये |
| ७४ | ९ | एण्य: | एर्ण्य: |
| ७४ | १५ | नतु | ननु |
| ७६ | ११ | तृत्रीय | तृतीय |
| ७७ | १ | त्रेत्य | वेत्य |
| ७७ | ४ | ततो | हि ततो |
| ७७ | २१ | भोज्य | भुज्य |
| ७९ | १७ | मूख | सूरच |
| ७९ | २२ | सिद्वै: | सिद्धै: |
| ८० | ८ | नो इ | नोइ |
| ८६ | २ | त्तेन | त्ते न |
| ८६ | ८ | पदे म | पद्म |
| ८९ | १६ | नैपा | नैपां |
| ९० | १५ | स्तदथ | स्तदर्थे |
| ९४ | ३ | सुष्ठ | सुष्ठु |
| ९४ | १७ | परोक्ष | परोक्ति |
| ९५ | ८ | येना | येऽना |
| ९५ | १३ | सुरचन्द्रमन: स्थि | सूरचन्द्रमन:स्थि |
| ९६ | १७ | स्वको | सको |
| ९७ | ७ | वोध्यो | बोध्यौ |
| ९८ | १ | य स | यसे |
| १०० | ५ | ता: | ता |
| १०० | १० | स्वा | स्व |
| १०१ | २० | सरण | सरणं |

